The Department of Public Instruction, Bombay.

THE

# NAISHKARMYASIDDHI

OF

## SUREŚVARÂCHÂRYA

WITH THE

CHANDRIKÂ OF JNÂNOTTAMA.

EDITED WITH NOTES AND INDEX

BY


Colonel G. A. Jacob

BOMBAY STAFF CORPS.



300 COPIES.





Bombay:

GOVERNMENT CENTRAL BOOK DEPÔT.

1891.





*Price 3 Rupees.*

Bombay Sanskrit Series No. XXXVIII.

# नैष्कर्म्यसिद्धिः

चन्द्रिकासहिता ।

आब्रह्मस्तम्बपर्यन्तैः सर्वप्राणिभिः सर्वप्रकारस्यापि दुःखस्य स्वरसत एव जिहासितत्वात्तन्निवृत्त्यर्था प्रवृत्ति-

---

श्रीगणपतिसरस्वतिसद्गुरुभ्यो नमः ।

ॐ । विष्णोस्तत्परमं धाम द्योतमानं निजश्रिया ।
अनन्तामितमद्वैतमात्मभूतं पुनातु नः ॥ १ ॥
तेजस्त्रैयम्बकं भूयाद्भूयसे श्रेयसे मम ।
यदाचामति निःशेषं भक्तानां भववारिधिम् ॥ २ ॥
नैष्कर्म्यसिद्ध्यभिधया सुधया सुधियां व्यधात् ।
योऽमृतत्वं नमामस्तं सुरेश्वरसुधानिधिम् ॥ ३ ॥
तर्कोद्ग्रनखोद्भिन्नवादिदैत्यभुजान्तरः ।
प्रह्लादयतु नः शश्वज्ज्ञानोत्तममृगोत्तमः ॥ ४ ॥
चोलेषु मङ्गलमिति प्रथितार्थनाम्नि
ग्रामे वसन्पितृगुरोरभिधां दधानः ।
ज्ञानोत्तमः सकलदर्शनपारदृष्टा
नैष्कर्म्यसिद्धिविवृतिं कुरुते यथावत् ॥ ५ ॥

व्याचिख्यासितायाः श्लोकसंदर्भरूपाया नैष्कर्म्यसिद्धेरधिकारिप्रयोजनतत्साधनसंबन्धविषयाणामभावादनारम्भमाशङ्क्य स्वयमेव संबन्धोक्तिं कुर्वन्नाचार्यः प्रकरणारम्भसिद्ध्यर्थं क्रमेण तानुपपादयति आब्रह्मस्तम्बपर्यन्तैरित्यादिना प्रकरणमिदमारभ्यत इत्यन्तेन ग्रन्थेन । तत्र तावदधिकारिणमुपपादयति तन्निवृत्त्यर्था प्रवृत्तिरस्ति स्वरसत एवेत्यन्तेन । आब्रह्म च ते स्तम्बपर्यन्ताश्चेत्याब्रह्मस्तम्बपर्यन्तास्तैश्चतुर्मुखप्रभृतिभिः स्तम्बावसानैः प्राणिभिरिति यावत् । सर्वप्रकारस्याध्यात्मिकादिभेदभिन्नस्य स्वरसत एव स्वभावत एव शास्त्राधेयसंस्कारमन्त-

रस्ति स्वरसत एव। दुःखस्य च देहोपादानैकहेतुत्वाद्देहस्य च पूर्वोपचितधर्माधर्ममूलत्वादनुच्छित्तिः। तयोश्च विहितप्रतिषिद्धकर्ममूलत्वादनिवृत्तिः। कर्मणश्च रागद्वे-

---

रेणेति यावत्। इदमत्र तात्पर्यम्। यद्यप्यतीतं दुःखमतीतत्वादेव न निवर्त्त्यं नापि वर्त्तमानं स्वत एव निवृत्तेर्नाप्यनागतमनुपस्थितेरेव निवर्त्तयितुमयोग्यत्वात्तथाप्यनागतं दुःखं तद्धेतुनिवर्त्तनेन शक्यमेव निवर्त्तयितुमतः संभवत्येव निखिलदुःखनिवृत्तिकामोऽधिकारीति। नन्वाध्यात्मिकदुःखस्याधिव्याधिप्रभवस्यायुर्वेदविहितोपायैराधिभौतिकस्य च शत्रुव्याघ्रादिजन्यस्यान्वयव्यतिरेकसिद्धतत्तत्साधनैराधिदैविकस्य चातिवातातिवर्षणादिनिमित्तस्य शान्तिकपौष्टिकादिना निवृत्तिः स्यात्ततः प्रकरणस्य न प्रयोजनमन्यत एव सिद्धेरित्याशङ्क्यात्यन्तिकदुःखनिवृत्तिलक्षणप्रयोजनस्य प्रकरणप्रतिपाद्यात्मविद्याव्यतिरिक्तसाधनान्तरासाध्यत्वं दर्शयति दुःखस्य चेत्यादिना अशेषपुरुषार्थपरिसमाप्तिरित्यन्तेन। देहस्य कार्यकारणसंघातलक्षणस्योपादानमहंममग्रहः स एवैको मुख्यो हेतुर्यस्य तद्दुःखं देहोपादानैकहेतुस्तस्य भावस्तत्त्वं तस्मादिति विग्रहः। दुःखस्यानुच्छित्तिरिति वक्ष्यमाणेन संबन्धः। यद्यपि कदाचित्किंचिद्दुःखं देहे सत्यपि निवर्त्यमानमुपलभ्यते तथापि स्वसमानाधिकरणदुःखान्तरप्रागभावासमानकालीनदुःखनिवृत्तेर्देहोपादाने सत्यसंभवान्न हि तन्निवृत्तिरुपायान्तरसाध्येति भावः। एवमपि कार्यत्वादुपादीयमानदेहस्य स्वयमेव निवृत्तेः किमत्र विद्ययेत्यत आह देहस्य चेति। देहस्य देहसन्तानस्य पूर्वैः प्राक्तनदेहैरुपचितावुपार्जितौ यौ धर्माधर्मौ तद्धेतुकत्वात्तयोः सतोर्नोच्छित्तिरित्यर्थः। एवमपि धर्माधर्मयोरुपभोगेन क्षये सति कारणाभावाद्देहसन्तानस्यापि विच्छेदो भविष्यतीत्यत आह तयोश्चेति। तयोरपि धर्माधर्मयोर्विहितप्रतिषिद्धे ये कर्मणी यजनब्रह्महननादिव्यापारलक्षणे तज्जन्यत्वात्तयोः स्थितौ न निवृत्तिरित्यर्थः। विहितनिषिद्धकर्मणोरपि क्षणिकत्वात्स्वयमेव वि-

षास्पदत्वाद्रागद्वेषयोश्च शोभनाशोभनाध्यासनिबन्धनत्वादध्यासस्य चाविचारितसिद्धद्वैतवस्तुनिमित्तत्वाद्द्वैतस्य च शुक्तिकारजतादिवत्सर्वस्यापि स्वतःसिद्धाद्वितीयात्मानवबोधमात्रोपादानत्वादव्यावृत्तिः । अतः सर्वानर्थहेतुरात्मानवबोध एव । सुखस्य चानागमापायिनोऽपरत-

---

च्छेदो भविष्यतीत्यत आह कर्मणश्चेति । व्यक्तिरूपेण विच्छिद्यमानस्यापि कर्मजातस्य रागद्वेषप्रयोज्यत्वात्तयोः स्थितौ न तत्सन्तानविच्छेद इत्यर्थः । रागद्वेषयोरपि कार्यत्वात्स्वत एव निवृत्तिरित्याशङ्क्याह रागद्वेषयोश्चेति । विषयेषु शोभनं रमणीयमिदमिति यः प्रत्ययो यश्च तद्विपरीतमशोभनमिति प्रत्ययस्तावव्यभिचारिणि विषये व्यभिचारित्वाद्विभ्रमभूतौ तयोश्च स्थितयोर्न तज्जन्यरागद्वेषसन्तानविच्छेद इत्यर्थः । तयोरप्यध्यासयोरनित्यत्वात्स्वत एव निवृत्तिमाशङ्क्याह अध्यासस्येति । अध्यासस्य द्वैतप्रपञ्चनिबन्धनत्वात्तस्मिन्विद्यमाने निवृत्तिर्न स्यादित्यर्थः । द्वैतप्रपञ्चस्यापि कार्यत्वादनित्यत्वमाशङ्क्याह द्वैतस्य चेति । सर्वस्यापि द्वैतप्रपञ्चस्य स्वतःसिद्धत्वात्स्वयंप्रभत्वादद्वितीयो द्वितीयशून्यो योऽयमात्मा तस्य तस्मिन्योऽयमनवबोधः स्वतःसिद्धतया सततमद्वैतरूपेण प्रकाशप्राप्तौ तथा प्रकाशादर्शनाच्छुक्तिकारजतादिवद्विपरीतरूपप्रकाशदर्शनाच्च तद्धेतुतया कल्पितस्तन्मात्रोपादानत्वात्तस्मिन्विद्यमाने तस्य न निवृत्तिरित्यर्थः । तदेवमज्ञानस्य द्वैतप्रपञ्चाध्यासरागद्वेषप्रवृत्तिधर्माधर्मदेहोपादानत्वात्परंपरया दुःखहेतुत्वात्तस्मिन्सति दुःखस्योपायान्तरेण न निवृत्तिरित्युपसंहरति अत इति । न केवलमसौ सर्वानर्थहेतुरात्मस्वभावतया सततमपरोक्षावभासयोग्यतां प्राप्तस्य सुखस्यापि तिरोधायकस्तस्मात्तन्निवृत्तौ निरतिशयसुखावाप्तिरस्मन्मते सम्यग्ज्ञानात्सिध्यतीत्यभिप्रेत्याह सुखस्य चेति । आगमश्चापायश्चागमापायावुदयास्तमयौ तौ विद्येते यस्य तदागमापायि नागमापाय्यनागमापायि तस्येत्यर्थः । अनागमापायित्वं कुत इत्यत आह अपरत-

ऽस्यात्मस्वभावत्वात्तस्यानवबोधः पिधानम् । अतस्तस्यात्यन्तोच्छित्तावशेषपुरुषार्थपरिसमाप्तिः । अज्ञाननिवृत्तेश्च सम्यग्ज्ञानस्वरूपलाभमात्रहेतुत्वात्तदुपादानम् । अशेषानर्थहेत्वात्मानवबोधविषयस्य चानागमिकप्रत्यक्षादिलौकिकप्रमाणाविषयत्वाद्वेदान्तागमवाक्यादेव सम्य-

---

न्त्रस्येति । कारणानधीनस्येत्यर्थः । इतश्चानागमापायित्वमपरतन्त्रत्वं चोचितमित्याह आत्मस्वभावत्वादिति । सुखमनागमापायि अपरतन्त्रं चात्मस्वभावत्वादात्मवदित्यर्थः । "एषोऽस्य परम आनन्द" "आत्मैवानन्द" इत्याद्यागमान्निरुपाधिकप्रेमास्पदत्वलिङ्गाच्च सुखस्यात्मस्वभावत्वमवगन्तव्यम् । ननु सुखस्यानवबोधः पिधायकोऽस्तु ततः किमित्यत आह अतस्तस्येति । तस्यानवबोधस्यात्यन्तमनवशेषेण भूयश्चान्ते विश्वमायानिवृत्तिरिति न्यायेन निवृत्तावशेषसकलदुःखनिवृत्तिरूपस्य निरतिशयानन्दावाप्तिलक्षणस्य च पुरुषार्थस्य परितः सम्यगाप्तिः स्यादित्यर्थः । ननु भवत्वेवं तथापि कर्मोपासनादिपरिहारेण विशिष्टाधिकारिणः सम्यग्ज्ञान एव कुतः प्रवृत्तिर्येन सम्यग्ज्ञानाय प्रकरणारम्भसंभव इत्यत आह अज्ञाननिवृत्तेश्चेति । सम्यग्ग्रहणेनोपासनाज्ञानं व्यावर्त्तयति स्वरूपलाभग्रहणेन ज्ञानाभ्यासं मात्रपदेन च कर्मापेक्षाम् । तदेवमुपायान्तरपरिहारेणाधिकारिणः सम्यग्ज्ञानोपादानमेव संभवतीत्यर्थः । भवतु सम्यग्ज्ञानस्योपादानं तथापि तस्य प्रमाणान्तरादप्युपपत्तेर्वेदान्तप्रकरणादिष्वेव तदर्थिनः कुतो नियमेन प्रवृत्तिरित्यत आह अशेषानर्थहेत्विति । अशेषानर्थहेत्वात्मानवबोधविषय आत्मा तस्याज्ञानविषयस्यात्मन इति यावत् । आगमिकमागमवाक्यजन्यं साक्षात्कारलक्षणं तन्न भवतीत्यनागमिकं प्रत्यक्षम् । आदिशब्देनानुमानादि "यत्प्राणेन प्राणिति येन वा पश्यती"त्याद्यस्ति तद्विषयत्वशङ्कापनोदायाह अनागमिकेति । कानि तानीत्यत आह लौकिकप्रमाणेति । तेषां चात्मा न विषयो रूपाद्यभावात्तत्संबन्धलिङ्गाद्यदर्शनाच्च । तदेवमनन्यसाधारणत्वादुपनिषदामेवात्मा विषय इत्याह वेदान्तेति । आगमग्रहणं

ग्ज्ञानम् । अतोऽशेषवेदान्तसारसङ्ग्रहप्रकरणमिदमारभ्यते । तत्राभिलषितार्थप्रचयाय प्रकरणार्थसंसूत्रणाय चायमाद्यः श्लोकः ।

खानिलाग्न्यब्धरित्र्यन्तं स्रक्फणीवोद्गतं यतः ।
ध्वान्तच्छिदे नमस्तस्मै हरये बुद्धिसाक्षिणे ॥ १ ॥

---

"वेदोपरा वेदान्ता" इति मतनिरासेन प्रामाण्यसूचनाय । वाक्यग्रहणं च न कर्मशेषतया तेनैकवाक्यत्वं किंतु स्वतन्त्रतयेति द्योतनाय । एवकारश्च वाक्याभ्यासादेर्ज्ञानकारणत्वनिरासाय । इदानीं प्रकरणलक्षणमुपपादयन्प्रकरणारम्भमुपपादितमुपसंहरति अतोऽशेषेति । यत उक्तरीत्या प्रयोजनादीनां सद्भावः साधनान्तरानधीनं च प्रयोजनमत इत्यर्थः । अत्राशेषवेदान्तशब्देन शास्त्रं दर्शितम् । तत्रापि निष्प्रपञ्चब्रह्मप्रतिपादकशास्त्रैकदेशेन संबन्धद्योतनाय सारग्रहणम् । तत्रापि विस्तरेण प्रतिपादितस्य संक्षेपेण प्रतिपन्नं कार्यान्तरं दर्शयितुं संग्रहग्रहणम् । तदेवं "शास्त्रैकदेशसंबद्धं शास्त्रकार्यान्तरे स्थितम् । आहुः प्रकरणं नाम ग्रन्थभेदविपश्चित" इत्युक्तलक्षणलक्षितमिदं प्रकरणमिति । इदानीं प्रतिश्लोकं संबन्धमाचक्षाणः प्रथमश्लोकस्य तात्पर्यं कथयन्संबन्धमाह तत्राभिलषितेति । तत्र प्रकरणेऽयमाद्यः श्लोकोऽभिलषितार्थस्याभिलषितोऽर्थः प्रकरणं तस्य प्रचयाय शिष्यपरंपरया शिष्टपरिग्रहाय । उपलक्षणमिदमविघ्नपरिसमाप्तिशिष्टाचारपरिपालनयोरिष्टदेवतानमस्कारस्य विद्यायामन्तरङ्गसाधनत्वसूचनस्य प्रकरणस्यार्थो विषयः प्रयोजनं च तयोः सम्यक्सूत्रणं संक्षेपेण सूचनं तस्मै च । तत्र हेतुमाह अयमाद्यश्लोक इति । यस्मादयमाद्यश्लोकस्तस्माच्छ्रोतॄणां प्रवृत्त्यङ्गतया सुखावबोधाय चात्रैव सूचनीयमिष्टदेवतानमस्कारश्च करणीय इति । खानिलेति । खं चानिलश्चाग्निश्चापश्च धरित्री च खानिलाग्न्यब्धरित्र्यः । अन्तःशब्दः स्वरूपवचनः स्वप्नान्तं बुद्धान्तमित्यादिवत् । खानिलाग्न्यब्धरित्रीस्वरूपम् । यद्वा । खानिलाग्न्यब्धरित्रीशब्देन

**स्वसम्प्रदायस्य चोदितप्रमाणपूर्वकत्वज्ञापनाय विशिष्टगुणसम्बन्धसङ्कीर्त्तनपूर्विका गुरोर्नमस्कारक्रिया ।**

**अलब्ध्वातिशयं यस्माद्व्यावृत्तास्तमबादयः ।**
**गरीयसे नमस्तस्मा अविद्याग्रन्थिभेदिने ॥ २ ॥**

---

पञ्चीकृतानि पञ्चमहाभूतान्युच्यन्ते तानि भूतान्यन्तं लयं यस्य भौतिकस्य जगतस्तत्खानिलाग्न्यब्धरित्र्यन्तम् । यद्वा । खानिलाग्न्यब्धरित्रीशब्देनापञ्चीकृतानि पञ्चमहाभूतान्युच्यन्ते तानि भूतान्यन्तं यस्य पञ्चीकृतभूतलक्षणस्य जगतस्तत्खानिलाग्न्यब्धरित्र्यन्तमित्यनुपात्तं विशेष्यम् । बहुव्रीहित्वाज्जगदित्येकं पदमध्याहरणीयम् । अथवा । उद्गतमिति कार्यजातमुच्यते तदेव विशेष्यम् । तत्खानिलाग्न्यब्धरित्र्यन्तं कार्यजातं यतो भवतीति क्रियाध्याहारः । यदि च खं चानिलश्चाग्निश्चापश्चेति खानिलाग्न्यब्धरित्री यस्यान्तं तद्धरित्र्यन्तम् । किं तद्धरित्र्यन्तमित्याकाङ्क्षायां खानिलाग्न्यबितिसंबन्धः । तत्खानिलाग्न्यब्धरित्र्यन्तम् । स्रक्फणीवेत्यादि । स्रजः फणीव उद्गतमुद्भूतम् । तस्मै ध्वान्तच्छिदे बुद्धिसाक्षिणे हरये नम इति संबन्धः । स्रक्फणीवेत्यारम्भपरिणामवादव्युदासाय । हरये बुद्धिसाक्षिण इति सामानाधिकरण्यं प्रत्यगात्मपरमात्मनोरेकत्वलक्षणविषयद्योतनाय । ध्वान्तच्छिद इत्यज्ञाननिवृत्तिलक्षणप्रयोजनकथनाय ॥ १ ॥

इदानीमुत्तरश्लोकतात्पर्यमाह स्वसंप्रदायस्येति । स्वसंप्रदायः स्वेन संप्राप्तो विद्योपदेशस्तस्य । चशब्दो देवतानमस्कारेण गुरुनमस्कारस्य समुच्चयार्थः । तस्योदितं प्रमाणमाचार्यः । "आचार्यवान्पुरुषो वेद" "आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापदि"त्यादिश्रुतिभ्यस्तत्पूर्वकत्वज्ञापनाय । चोदितप्रमाणेतिवा पदच्छेदस्तत्रायमेवार्थः । उदितप्रमाणेतिपाठेऽप्ययमेवार्थः । विशिष्टगुणैराचार्यस्य यः संबन्धस्तत्कीर्त्तनपूर्विका गुरोर्नमस्कारक्रिया प्रदर्श्यत इति शेषः । यद्वा । येयं नमस्कारक्रिया सा स्वसंप्रदायस्योदितप्रमाणपूर्वकत्वज्ञापनायेति संबन्धः । अलब्ध्वेति । यस्माद्गुरोरन्यत्रातिशयमलब्ध्वा तमबादयः प्रत्यया विप-

**नमस्कारनिमित्तस्वाशयाविष्करणार्थः ।**

**वेदान्तोदरसङ्गूढं संसारोत्सारि वस्तुगम् ।**
**ज्ञानं व्याकृतमप्यन्यैर्वक्ष्ये गुर्वनुशिक्षया ॥ ३ ॥**

**किंविषयं प्रकरणमिति चेत्तदुपन्यासः ।**

**यत्सिद्धाविदमः सिद्धिर्यदसिद्धौ न किञ्चन ।**
**प्रत्यग्धर्मैकनिष्ठस्य याथात्म्यं वक्ष्यते स्फुटम् ॥ ४ ॥**

---

याभावादेव व्यावृत्तास्तस्मिन्नेव परितिष्ठन्ति तस्मै गरीयसे नम इत्यन्वयः । तत्र हेतुमाह अविद्याग्रन्थिभेदिन इति । स्वस्यान्यैरभेद्याविद्याग्रन्थिभेत्तृत्वाद्गुरोरेवंविधता सिद्धेत्यर्थः ॥ २ ॥

समनन्तरश्लोकाभिप्रायमाह नमस्कारनिमित्तेति । नमस्कारस्य निमित्तभूतो यः स्वस्याशयोऽभिप्रायविशेषो येनाभिप्रायेण नमस्कारः कृतस्तस्याविष्करणार्थमुत्तरश्लोक इत्यर्थः । वेदान्तेति । ज्ञानं वक्ष्य इतिसंबन्धः । किंप्रमाणकं तदित्यत आह वेदान्तोदरसंगूढमिति । वेदान्तानामुदरेष्वन्तरेषु संगूढं संछन्नमशुद्धबुद्धिभिरप्राप्यत्वात् । किंप्रयोजनं तदित्यत आह संसारोत्सारीति । किंविषयं तदित्यत आह वस्तुगमिति । समस्तद्वैतकल्पनाधिष्ठानभूतात्मतत्त्वविषयं तदित्यर्थः । नन्वेतस्य ज्ञानस्य बहुभिर्व्याकृतत्वात्किमिति त्वया तद्व्याक्रियत इत्यत आह व्याकृतमपीति । बहुभिर्व्याकृतमपि गुर्वनुशिक्षया त्वया ग्रन्थः कर्तव्य इति गुरोरनुशासनेन तदाज्ञापरिपालनायाहं तद्वक्ष्य इत्यर्थः ॥ ३ ॥

ननु सामान्यतः सिद्धं विशेषेणाप्रसिद्धं च वस्तु विषयो भवति ब्रह्म तु निःसामान्यविशेषमद्वितीयत्वादतः कथं तद्विषयत्वं प्रकरणस्येत्याक्षिपति किंविषयमिति । तत्समाधानायोत्तरश्लोक इत्याह तदुपन्यास इति । यद्विषयमिदं प्रकरणं तस्य विषयस्योपन्यास इत्यर्थः । यत्सिद्धाविति । यस्य चिदात्मनः सिद्धावन्तःकरणादावाभासोदयात्स्फुटतरव्यवहारयोग्यत्वे सतीदमः प्रमात्रादेरनात्मनो जडस्य सिद्धिः स्फुरणम् । यदसिद्धौ यस्यात्मनोऽन्तःकरणादावाभासानुदयादसिद्धौ स्फुटतरव्यवहारायो-

**विवक्षितप्रकरणार्थप्ररोचनायानुक्तदुरुक्ताप्रामाण्यकारणशङ्काव्युदासेन स्वगुरोः प्रामाण्योपवर्णनम् ।**

**गुरूक्तो वेदराद्धान्तस्तत्र नो वच्म्यशक्तितः ।**
**सहस्रकिरणव्याप्ते खद्योतः किं प्रकाशयेत् ॥ ५ ॥**

---

ग्यत्वे सति न किञ्चन प्रमात्रादि जडं सिध्यतीतिशेषः । यद्वा । न किंचन न कस्यचनेत्यर्थः । तदेवमनिर्णीतप्रमाणाप्रमाणकरणीयलोकप्रसिद्धेश्चिदात्मनि भावाद्ब्रह्मणः सामान्यतः सिद्धिरुक्तेति मन्तव्यम् । ननु ब्रह्मणो निःसामान्यविशेषत्वादविशेषत्वमुक्तमित्याशङ्क्य तथापि तस्य सच्चिदात्मादिसाधारणाकारेण सिद्धावपि सर्वप्रपञ्चविभ्रमाधिष्ठाननित्यशुद्धबुद्धमुक्ताद्वितीयानन्दलक्षणासाधारणाकारेणासिद्धेः संभवति प्रकरणविषयत्वमित्याह प्रत्यग्धर्मेति । आत्मानात्मविवेकाद्देहादिष्वात्मतया बहिर्भावमापद्यमानेषु प्रातिलोम्येनान्तरमञ्चतीवेतिप्रत्यक्साक्षी स चासौ धर्मश्चेति प्रत्यग्धर्मः । अविद्यातत्कार्ययोः स्वात्मन्यध्यस्तयोरधिष्ठानत्वेन धारणाद्धर्मः प्रत्यग्धर्म एवैकस्मिन्निष्ठापर्यवसानमस्येति प्रत्यग्धर्मैकनिष्ठस्तस्य । आत्मानमनतिक्रम्य वर्त्तत इति यथात्मं तस्य भावो याथात्म्यम् । आरोपितप्रपञ्चस्वभावविरोधि ब्रह्मतत्त्वं तदितस्ततो विस्तरेण शारीरके दर्शितमित्यस्पष्टम् । इह तु संक्षिप्यैकत्र विस्पष्टमुच्यत इत्याह वक्ष्यते स्फुटमिति ॥ ४ ॥

स्फुटं वक्ष्यत इत्युक्तत्वाद्गुरुणा सम्यग्वेदार्थो नोक्त एवेतिगुरोरप्रामाण्यमज्ञानलक्षणं विपर्ययलक्षणं च प्राप्तं तद्द्वारा स्वस्यापि तत्प्राप्तमतस्तन्निरासायोत्तरश्लोक इत्याह विवक्षितेति । वक्तुमिष्टे प्रकरणस्यार्थे शिष्याणां रुच्युत्पादनायानुक्तदुरुक्तयोरप्रामाण्यज्ञप्तिहेतुभूतयोर्व्युदासेन स्वगुरोः प्रामाण्योपवर्णनं क्रियत इत्यर्थः । गुरूक्त इति । गुरूक्त इत्युक्तत्वादेवानुक्तिलक्षणमप्रामाण्यं नास्ति वेदराद्धान्तस्यैवोक्तत्वाद्दुरुक्तलक्षणमप्रामाण्यं च नास्तीति दर्शितम् । तत्किमप्यधिकं त्वयोच्यत इति नेत्याह तत्र नो वच्मीति । तत्र वेदान्तराद्धान्ते न वच्म्यधिकमिति

गुरुणैव वेदार्थस्य परिसमापितत्वात्प्रकरणोक्तौ ख्यात्याद्यप्रामाण्यकारणाशङ्केति चेत्तद्व्युदासार्थमुपन्यासः ।

न ख्यातिलाभपूजार्थं ग्रन्थोऽस्माभिरुदीर्यते ।
स्वबोधपरिशुद्ध्यर्थं ब्रह्मविन्निकषाश्मसु ॥ ६ ॥

अनर्थानर्थहेतुपुरुषार्थतद्धेतुप्रकरणार्थसङ्ग्रहज्ञापनायोपन्यासः ।

ऐकात्म्याप्रतिपत्तिर्या स्वात्मानुभवसंश्रया ।
साविद्या संसृतेर्बीजं तन्नाशो मुक्तिरात्मनः ॥ ७ ॥

---

शेषः । तत्र हेतुः अशक्तित इति । तत्र दृष्टान्तमाह सहस्रकिरणेति । यद्वा तत्रानुक्तं दुरुक्तं वा न वच्मीत्यर्थः ॥ ५ ॥

गुरुणैवेति । भाष्यकारैरेव कार्त्स्न्येन वेदार्थस्य सम्यगुक्तत्वात्किमर्थं प्रकरणमारभ्यते त्वया तस्मात्प्रकरणारम्भादुपरतिरेव श्रेयसी । अनुपरमे वा ख्यातिलाभपूजानामन्यतमार्थं ग्रन्थकरणमिति प्रसज्येत ततश्चाप्रामाण्यशङ्का स्यात्ख्यात्यादेरप्रामाण्यकारणत्वात् । अग्रहणान्यथाग्रहणपूर्वकत्वात्ख्यात्याद्यर्थित्वस्येति तन्निरासायोत्तरश्लोकारम्भ इत्यर्थः । ननु यदि ख्यात्याद्यर्थं ग्रन्थोदीरणं न भवति तर्हि गुरुणैव वेदराद्धान्तस्योपदेशसहस्रिकादिप्रकरणेषु सम्यगुक्तत्वात्प्रकरणोक्तिस्तवानर्थिकेत्यत आह स्वबोधेति । निकषन्ति निष्कर्षन्ति येषु हेम परीक्षितुं ते निकषाश्मानः । इह तु ब्रह्मविद एव निकषाश्मानस्तेषु स्वबोधस्य परिशोधनार्थमेतत्प्रकरणमनुक्तौ स्वबोधस्य परैः परीक्षितुमशक्यत्वादित्येव वक्तुः प्रयोजनमिदं दर्शितम् । श्रोतॄणां तु वक्ष्यते स्फुटमित्यत्रैव दर्शितम् ॥ ६ ॥

तर्हि कियन्तोऽर्थाः प्रकरणेन प्रतिपाद्यन्त इत्यत आह अनर्थेति । अनर्थोऽनर्थहेतुः पुरुषार्थस्तद्धेतुरिति प्रकरणेन चत्वारोऽर्थाः पूर्वोक्तविषयस्यैव प्रतिपादनाय प्रदर्श्यन्ते ते चोत्तरश्लोकाभ्यां संगृह्योच्यन्त इत्यर्थः । ऐकात्म्येति । एकोऽद्वितीय आत्मा एकात्मा तस्य भाव ऐकात्म्यं तद्विषयाप्रतिपत्तिरैकात्म्याप्रतिपत्तिरित्यविद्याविषयो दर्शितः । सांप्र-

पुरुषार्थहेतोरवशिष्टत्वात्तदभिव्याहारः ।

वेदावसानवाक्योत्थसम्यग्ज्ञानाशुशुक्षणिः ।
दन्दहीत्यात्मनो मोहं न कर्माप्रतिकूलतः ॥ ८ ॥

प्रतिज्ञातार्थसंशुद्ध्यर्थं पूर्वपक्षोक्तिस्तत्र ज्ञानमभ्युपगम्य तावदुपन्यासः ।

मुक्तेः क्रियाभिः सिद्धत्वाज्ज्ञानं तत्र करोति किम् ।
कथं चेच्छृणु तत्सर्वं प्रणिधाय मनो यथा ॥ ९ ॥

---

तमाश्रयोऽपि स एवेत्याह स्वात्मेति । स्वश्चासावात्मा चेति स्वात्मा । स्वशब्देनारोपितात्मभावानहंकारादीन्व्यावर्त्तयति । स्वात्मा चासावनुभवश्चेति स्वात्मानुभवः स एवाश्रयो यस्याः सा तथोक्ता । एवंभूता साविद्या संसारस्य कर्तृत्वादिलक्षणस्य बीजमुपादानमित्यनर्थोऽनर्थहेतुश्च दर्शितः । इदानीं पुरुषार्थं च दर्शयति तन्नाश इति । आत्मनो मुक्तिर्नाम तस्या अविद्याया निवृत्तिर्नान्या भावरूपा अभावरूपा वा साध्यास्तीत्यर्थः ॥ ७ ॥

प्रतिज्ञातेषु त्रयाणामुक्तत्वाच्चतुर्थस्योपन्यासायोत्तरश्लोक इत्याह पुरुषार्थहेतोरिति । वेदावसानेति । तत्र सम्यग्ग्रहणमुपासनाज्ञाननिवृत्त्यर्थं सम्यग्ज्ञानाग्नेरविद्यातत्कार्यादेरशेषतो निवर्त्तकत्वलक्षणातिशयाभिप्रायेण दन्दहीतीति यङ्लुक्प्रयोगः । आशुशुक्षणिसादृश्यं च समर्थस्यापि दाह्यैकदेशस्य प्रारब्धभोगादेरनिवर्त्तकत्वाभिप्रायेण । एवं मोक्षलक्षणपुरुषार्थसाधनं ज्ञानमेवेत्युक्तम् । तत्र कर्मणो ज्ञानेन समुच्चितस्यासमुच्चितस्य वा मुक्तिसाधनत्वं विस्तरेण निराचिकीर्षुः संक्षिप्य तावत्प्रतिजानीते न कर्मेति । तत्र हेतुरप्रतिकूलत इति । निवर्त्त्येन बन्धेन स्वरूपतो विषयद्वारा वा जडस्याप्रमाणभूतस्य कर्मणो विरोधाभावादित्यर्थः ॥ ८ ॥

विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णय इतिन्यायाज्ज्ञानमेव मुक्तिसाधनं न कर्मेति प्रतिज्ञातार्थस्य संशुद्ध्यर्थं निर्णयार्थं पूर्वपक्षोक्तिः

अकुर्वतः क्रियाः काम्या निषिद्धास्त्यजतस्तथा ।
नित्यनैमित्तिकं कर्म विधिवच्चानुतिष्ठतः ॥ १० ॥

किमतो भवति ।

काम्यकर्मफलं तस्माद्देवादीमं न ढौकते ।
निषिद्धस्य निरस्तत्वान्नारकीं नैत्यधोजनिम् ॥ ११ ॥

---

क्रियत इत्युत्तरश्लोकसन्दर्भस्य तात्पर्यमाह प्रतिज्ञातेति । तत्र पूर्वपक्षो द्विविधः । केचिद्यथावस्थितात्मविषयं ज्ञानमिच्छन्ति केचिन्नेच्छन्तीति । तत्रैतावदेवंविधं ज्ञानमभ्युपगम्यापि कर्मैव मोक्षसाधनमिति मन्यन्ते तन्मतप्रदर्शनायाभ्युपेत्यैवमुच्यत इत्यतः प्राक्तनो ग्रन्थ इत्याह तत्र ज्ञानमिति । ज्ञानिनोऽपि यावज्जीवादिश्रुतिचोदितकर्मणामकरणे प्रत्यवायहेतूनामवश्यानुष्ठेयत्वात्तैरेव मोक्षसिद्धेर्विद्यमानमपि ज्ञानमकिंचित्करमित्याह मुक्तेरिति । केवलेभ्य एव कर्मभ्यो मोक्षस्य सिद्धत्वाद्ब्रह्मज्ञानमनर्थकं विद्यमानस्याप्यकिंचित्करत्वादिति भाट्टाः प्रतिपेदिर इत्यर्थः । कर्मणामनित्यफलसाधनानां कथं नित्यमोक्षसाधनत्वमिति शङ्कते कथं चेदिति । स्वरूपावस्थानलक्षणाया मुक्तेरसाध्याया अपि प्रतिबन्धनिरोधात्सिद्धिं संभावयाम इत्याह शृण्विति ॥ ९ ॥

संसारस्याविद्याहेतुत्वमुपगच्छतापि कर्महेतुत्वस्य "पुण्यः पुण्येन कर्मणा भवति पापः पापेन" "कर्मणा बध्यते जन्तुरि"त्यादिश्रुतिस्मृतिभ्योऽवश्याश्रयणीयत्वात् काम्यप्रतिषिद्धकरणविहिताकरणलक्षणनिमित्तपरिहारेण नैमित्तिकस्य तस्य स्वरूपावस्थानप्रच्युतिलक्षणस्य परिहारात्स्वरूपावस्थानलक्षणा मुक्तिर्ज्ञानं विनापि सिध्यतीत्याह अकुर्वत इति । मुक्तिर्भवतीति शेषः ॥ १० ॥

अतः काम्यादिवर्जनादिसाधनात्स्वरूपावस्थानलक्षणा मुक्तिः केन द्वारेण भवतीति पृच्छति किमत इति । देवादि देवत्वादिफलं काम्यकर्मत्यागिनमिमं न ढौकते न स्पृशति निमित्ताभावान्निषिद्धस्य निरस्त-

देहारम्भकयोश्च धर्माधर्मयोर्ज्ञानिना सह कर्मिणः समानौ चोद्यपरिहारौ ।

वर्त्तमानमिदं याभ्यां शरीरं सुखदुःखदम् ।
आरब्धं पुण्यपापाभ्यां भोगादेव तयोः क्षयः ॥ १२ ॥

काम्यप्रतिषिद्धकर्मफलत्वात्संसारस्य तन्निरासेनैवाशेषानर्थनिरासस्य सिद्धत्वात्किं नित्यानुष्ठानेनेति चेत्तन्न तदकरणादप्यनर्थप्रसक्तेः ।

नित्यानुष्ठानतश्चैनं प्रत्यवायो न संस्पृशेत् ।
अनादृत्यात्मविज्ञानमतः कर्माणि संश्रयेत् ॥ १३ ॥

---

त्वात्परिहृतत्वान्नारकीं नरकसम्बन्धिनीं जनिं शरीरग्रहणलक्षणां न प्राप्नोति । उपलक्षणमेतत्तिर्यगादिजन्मप्राप्तेरपि ॥ ११ ॥

भवत्वेवमप्रारब्धफलयोः कर्मणोः परिहारः प्रारब्धयोस्तु कथमित्यत आह देहारम्भकयोश्चेति । प्रारब्धफलयोस्तु कर्मणोर्भोगादेव क्षय इत्यत्र नावयोर्विवाद इत्युत्तरश्लोकस्य तात्पर्यमुक्तम् ॥ १२ ॥

काम्यप्रतिषिद्धकर्मफलत्वात्संसारस्य तत्परिहारेण परिहारोऽस्तु नित्यनैमित्तिकानुष्ठानं पुनरनुपयुक्तं तयोः सुखदुःखसाधनत्वाभावान्मोक्षस्य कर्मजन्यत्वानङ्गीकाराच्चेत्याक्षिपति काम्यप्रतिषिद्धेति । समाधत्ते तन्न तदकरणादपीति । नित्याकरणस्य संसारानर्थकारणप्रत्यवायहेतुत्वात्प्रत्यवायपरिहारद्वारेण तदनुष्ठानमप्युपयुक्तमित्यर्थः । कथमकरणादभावात्प्रत्यवायस्य भावस्योत्पत्तिरिति च नाशङ्कनीयं योग्यानुपलब्धेरभावज्ञानहेतुत्ववदकरणस्यापि प्रत्यवायहेतुत्वोपपत्तेरिति तदेतदाह नित्यानुष्ठानत इति । अवान्तरप्रकरणमुपसंहरति अनादृत्येति । अभ्युपगतेऽपि ज्ञाने कर्मैव मोक्षसाधनमित्यर्थः ॥ १३ ॥

अभ्युपेत्यैवमुच्यते । न तु यथावस्थितात्मवस्तुविषयं ज्ञानमस्ति तत्प्रतिपादकप्रमाणाभावात् ।

यावन्त्यश्चेह विद्यन्ते श्रुतयः स्मृतिभिः सह ।
विदधत्युरुयत्नेन कर्मातो भूरिसाधनम् ॥ १४ ॥

स्यात्प्रमाणासम्भवो भवदपराधादिति चेत्तन्न यतः ।

यत्नतो वीक्षमाणोऽपि विधिं ज्ञानस्य न क्वचित् ।
श्रुतौ स्मृतौ वा पश्यामि विश्वासो नान्यतोऽस्ति नः ॥

---

अभ्युपगतं चेज्ज्ञानं तत एव मुक्तिः स्वीक्रियतां "तमेव विदित्वातिमृत्युमेती"तिश्रुतेरित्याशङ्क्य द्वितीयं पूर्वपक्षमाह अभ्युपेत्यैवमिति । अभ्युपगम्य ब्रह्मज्ञानं तस्य मुक्तौ वैयर्थ्यमुक्तं न तु तद्ब्रह्मज्ञानमस्ति तत्प्रतिपादकप्रमाणाभावादित्यर्थः । प्रमाणाभावमेव दर्शयति यावन्त्य इति । श्रुतिलक्षणं स्मृतिलक्षणं वा प्रमाणमिह संभावितं तदुभयं कर्मविधायकमेव न ज्ञानविधायकम् । यदि ज्ञानमपि किंचिद्भवदभिमतमस्ति तदा तद्विधायकमपि वाक्यमुपलभ्येत । न चोपलभ्यते । ततश्च ज्ञानविषयप्रमाणानुपलब्ध्या ज्ञानलक्षणप्रमेयाभावावगम इत्यर्थः । उरुयत्नेन महता तात्पर्येणेत्यर्थः । भूरिसाधनं मोक्षं प्रत्यपि पुष्कलकारणमित्यर्थः ॥ १४ ॥

वेदान्तवाक्यशक्तितात्पर्यापरिज्ञानविजृम्भितमिदं प्रमाणाभाववचनमिति शङ्कते स्यात्प्रमाणेति । एतदुत्तरत्वेन श्लोकमवतारयति तन्नेति । यत्नतस्तात्पर्यतो वीक्षमाणः पर्यालोचयन्नपि ज्ञानस्य विधिं ज्ञानविषयं विधिं न पश्यामि । द्रष्टव्य इत्यादेः कर्मप्रवृत्तिहेतुभूतकर्त्रात्मज्ञानविषयपरत्वात्तस्य मोक्षसाधनज्ञानविषयत्वाभावादिति भावः । श्रुतिस्मृतिनिरपेक्षाणामपि सौगतादीनां मोक्षाय ज्ञाने प्रवृत्तिर्दृश्यत इत्यत आह विश्वास इति । नो वेदप्रमाणानुसारिणामस्माकं श्रुतिस्मृतिव्यतिरेकेण न प्रवृत्तिरितरप्रवृत्तेर्भ्रान्तिमूलतया प्रामाणिकत्वानङ्गीकारादित्यर्थः ॥१५॥

**स्यात्प्रवृत्तिरन्तरेणापि विधिं लोकवदिति चेत्तन्न यतः ।**

**अन्तरेण विधिं मोहाद्यः कुर्यात्साम्परायिकम् ।**
**न तत्स्यादुपकाराय भस्मनीव हुतं हविः ॥ १६ ॥**

**अभ्युपगतप्रामाण्यवेदार्थविज्जैमिन्यनुशासनाच्च ।**

**"आम्नायस्य क्रियार्थत्वादानर्थक्यमि"तोऽन्यथा ।**
**इति साटोपमाहोच्चैर्वेदविज्जैमिनिः स्वयम् ॥ १७ ॥**

**मन्त्रवर्णाच्च ।**

**"कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः" ।**
**इति मन्त्रोऽपि निःशेषं कर्मण्यायुरवासृजत् ॥ १८ ॥**

---

ननु ज्ञानादज्ञाननिवृत्तेरन्वयव्यतिरेकसिद्धत्वात्किमत्र विधिनेति शङ्कते स्यात्प्रवृत्तिरिति । सत्यमज्ञाननिवृत्तिमात्ररूपं चेत्कैवल्यं तदेवं स्यान्न त्वेवम् । अशरीरत्वलक्षणस्य कैवल्यस्य देहपातोत्तरकालीनत्वेनादृष्टफलत्वाज्ज्ञानस्यान्वयव्यतिरेकाभ्यां तत्साधनत्वावगमानुपपत्तेर्जीवन्मुक्तेश्च परिभाषामात्रत्वादिति श्लोकेन परिहरति तन्न यत इति । साम्परायिकं पारलौकिकं कर्म ॥ १६ ॥

न केवलं युक्तिभिरेव किंत्वाप्तवाक्यादपि वस्तुपरत्वं वेदस्य न सिध्यतीत्याह अभ्युपगतेति । अभ्युपगतं प्रामाण्यं यस्य सोऽभ्युपगतप्रामाण्यः स चासौ वेदार्थविच्चेति समासः । तस्य जैमिनेरनुशासनाद्वाक्यादित्यर्थः । आम्नायस्य वेदस्य क्रियार्थत्वात्कार्यपरत्वादितोऽन्यथा क्रियार्थत्वेऽसत्यानर्थक्यं "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामि"तिवदता दर्शितमित्यर्थः । साटोपं ससंभ्रममाहेति क्रियाविशेषणम् ॥ १७ ॥

वेदवचनादप्येवमित्याह मन्त्रवर्णाच्चेति । अध्यात्माधिकारे पठितोऽयं मुमुक्षोरपि निःशेषमायुः कर्मणि कर्मानुष्ठान एवावासृजदुत्सृष्टवान्विनियुक्तवान् यावज्जीवं कर्मैव कर्त्तव्यमिति दर्शितवानित्यर्थः ॥ १८ ॥

ज्ञानिनश्च वस्तुनि वाक्यप्रामाण्याभ्युपगमाद्वाक्यस्य च क्रियापदप्रधानत्वात्ततश्चाभिप्रेतज्ञानाभावः ।

विरहय्य क्रियां नैव संहन्यन्ते पदान्यपि ।
न समस्त्यपदं वाक्यं यत्स्याज्ज्ञानविधायकम् ॥ १९ ॥

ज्ञानाभ्युपगमेऽपि न दोषो यतः ।

कर्मणोऽङ्गाङ्गिभावेन स्वप्रधानतयाथवा ।
सम्बन्धस्येह संसिद्धेर्ज्ञाने सत्यप्यदोषतः ॥ २० ॥

---

एवं तात्पर्यभावाद्वस्तुपरत्वं वेदस्य निराकृत्य सांप्रतं सिद्धार्थावबोधने सामर्थ्याभावादपि पदानां न वस्तुपरतेत्युत्तरश्लोकतात्पर्यमाह ज्ञानिनश्चेति । ज्ञानिनोऽपि वस्तुनि वाक्यं प्रमाणमित्यत्र न विवादस्तच्च वाक्यं सत्येव क्रियापदे निराकाङ्क्षबुद्ध्युत्पादकम् । शुक्लां दण्डेन गामित्येतावन्मात्रप्रयोगे सत्यसति क्रियापदे निराकाङ्क्षबुद्ध्युत्पत्त्यदर्शनादतो वेदस्य क्रियापरत्वात्क्रियायाश्च साध्यैकविषयत्वान्न सिद्धवस्तुपरो वेदभागोऽस्तीत्यर्थः । किंच पदार्थानां स्वरूपेण प्रमाणान्तरसिद्धत्वाच्छ्रोतृणां तावन्मात्रप्रतिपत्तये पदप्रयोगायोगात्संसर्गबोधाय पदानां प्रयोगोऽभ्युपेयः । स च संसर्गः कारकाणां क्रियां विना न सिध्यतीति क्रियावबोधे सर्वशब्दानां सामर्थ्यम् । सा च क्रिया न प्रवर्त्तकं कार्यं विनेति सर्वपदानां कार्यान्विते शक्तिरित्याह विरहय्येति । ननु पदानां कार्यपरत्वेऽपि वाक्यात्सिद्धं वस्तु प्रतिपत्स्यामह इत्याशङ्क्य पदानामेव संहत्यार्थमभिदधतां वाक्यत्वात्तद्व्यतिरिक्तवाक्यस्याभावान्नैवमित्याह न समस्तीति ॥ १९ ॥

एवं केवलेभ्यः कर्मभ्यः कैवल्यं न सिद्धवस्तुविषयं ज्ञानमस्तीत्युक्तम् । इदानीं ज्ञानाभ्युपगमेऽपि न तावन्मात्रं कैवल्यसाधनं किंतु कर्मसमुच्चितमित्युत्तरश्लोकसम्बन्धमाह ज्ञानाभ्युपगमेऽपीति । यदेव विद्यया करोतीति वाक्याज्ज्ञानस्य नित्यनैमित्तिकादिकर्माङ्गत्वेन वा "यज्ञेन विविदिषन्ती"ति वाक्येन तदङ्गत्वेन वा "विद्यां चाविद्यां च यस्त-

यस्माज्ज्ञानाभ्युपगमानभ्युपगमेऽपि न ज्ञानान्मुक्तिः ।

अतः सर्वाश्रमाणां हि वाङ्मनःकायकर्मभिः ।
स्वनुष्ठितैर्यथाशक्ति मुक्तिः स्यान्नान्यसाधनात् ॥२१॥

असदर्थप्रलापोऽयमिति दूषणसम्भावनायाह ।

इति हृष्टधियां वाचः स्वप्रज्ञाध्मातचेतसाम् ।
घुष्यन्ते यज्ञशालासु धूमानद्धधियां किल ॥ २२ ॥

---

द्वेदोभयं सहे''ति वाक्येन तयोर्ज्ञानकर्मणोः समप्रधानतया वा परस्परं सम्बन्धस्य समुच्चयस्येह कैवल्ये फले सिद्धेः सत्यपि ज्ञाने समुच्चितस्य कर्मणः कैवल्यसाधनत्वे कश्चिदपि दोषो नास्तीत्याह कर्मण इति ॥ २० ॥

कर्मनिरपेक्षं ज्ञानं मुक्तिसाधनं न भवतीत्युक्तार्थोपसंहारभूतोत्तरश्लोकगतातःशब्दपरामृष्टं हेतुं दर्शयति यस्मादिति। नान्यसाधनात्केवलाज्ज्ञानान्न मुक्तिः स्यादित्यर्थः ॥ २१ ॥

प्रदर्शितं पूर्वपक्षमुपहसितुमुत्तरश्लोक इत्याह असदर्थेति। एवंविधाः पूर्वोक्ता वाचो यज्ञशालासु घुष्यन्ते किलेतिसंबन्धः। वक्तृद्वारा वाचां दूषणं संभावयति इति हृष्टधियामिति। वित्तपुत्रकलत्रादिपरित्यागपुरःसरं ज्ञाननिष्ठालक्षणबहुलायासमन्तरेण कर्मभ्य एव स्वर्गापवर्गावस्माकं सुखेनैव सिध्यत इति हृष्टा धीर्येषां तेषाम्। एतावता कथं तद्वचसामप्रामाणिकत्वमित्यत आह स्वप्रज्ञेति। स्वकीया प्रज्ञा युक्त्युपदेशबहिष्कृता संसारस्य कर्मनिमित्तत्वात्तत्परिहारेण परिहारः स्यादिति केवलोत्प्रेक्षालक्षणा तयाध्मातमुपबृंहितं चेतो येषां ते तथोक्ताः। तत्प्रज्ञाया यथार्थत्वाभावे श्रुतिस्मृतिलिङ्गानि सन्तीति सूचयति धूमानद्धेति। धूमेनानद्धा प्रतिबद्धा सम्यग्ग्रहणे धीर्येषां ते धूमानद्धधियः। एवं हि श्रौतानि स्मार्तानि च लिङ्गानि दृश्यन्ते। ''अग्निमुग्धो हैव धूमतान्तः स्वं लोकं न प्रतिप्रजानाति'' ''प्लवा ह्येते अदृढा यज्ञरूपाः'' ''न तं विदाथ य इमा जजान'' ''अविद्यायामन्तरे वर्तमानाः'' ''यामिमां पुष्पितां

दूषणोपक्रमावधिज्ञापनायाह ।

अत्राभिदध्महे दोषान् क्रमशो न्यायबृंहितैः ।
वचोभिः पूर्वपक्षोक्तिघातिभिर्नातिसम्भ्रमात् ॥ २३ ॥

चतुर्विधस्यापि कर्मकार्यस्य मुक्तावसम्भवान्न मुक्तेः कर्मकार्यत्वम् ।

अज्ञानहानमात्रत्वान्मुक्तेः कर्म न साधनम् ।
कर्मापमार्ष्टि नाज्ञानं तमसीवोत्थितं तमः ॥ २४ ॥

---

वाचमि"त्यादीनि । तस्मात्तदीयं ज्ञानमयथार्थमेवातस्तद्वाचः संभावितदोषा एवेति भावः ॥ २२ ॥

संप्रति संभावितदोषान्प्रकटीकर्तुमुत्तरग्रन्थसंदर्भ इतितात्पर्यमाह दूषणेति । अवधिः सीमा । अत्र केवलकर्मणो मुक्तिसाधनत्वमित्यस्मिन्पक्ष इत्यर्थः । तत्रापि व्युत्क्रमदोषं परिहरति क्रमश इति । स्वपक्षस्थापनोपयोगिन्यायोपपन्नतां दर्शयति न्यायेति । न केवलमेतावदेव परपक्षप्रतिक्षेपसामर्थ्यमप्यस्तीत्याह पूर्वपक्षेति । छलजातिनिग्रहस्थानादिभिर्न परोक्तयो निरस्यन्त इत्याह नातिसंभ्रमादिति । तेन तत्त्वनिर्णयावसानानि वादकथारूपाण्यस्मद्वचांसीति भावः ॥ २३ ॥

नित्यसिद्धात्मस्वरूपावस्थानप्रतिबन्धकसकार्याज्ञाननिवृत्तिव्यतिरेकेणोत्पत्त्याप्तिविकृतिसंस्कृतिलक्षणस्य कर्मफलस्य कैवल्येऽसम्भवादज्ञाननिवृत्तेश्च ज्ञानमात्रहेतुत्वान्न कर्मापेक्षेत्युत्तरश्लोकतात्पर्यमाह चतुर्विधस्यापीति । स्वरूपावस्थानस्य नित्यसिद्धतया कर्मसाध्यत्वाभावेऽप्यज्ञाननिवृत्तेरागन्तुक्याः कर्मसाध्यत्वं किं न स्यादित्यत आह कर्मापमार्ष्टीति । तत्र दृष्टान्तमाह तमसीति । तमसि सत्येवोत्थितं रशनोरगभ्रमादि यथा तमो न निवर्त्तयति तद्धेतुकत्वादेवमज्ञानहेतुकं कर्म नाज्ञानं निवर्त्तयति तेन स्वभावतो विषयतश्च विरोधाभावादित्यर्थः ॥ २४ ॥

कर्मकार्यत्वाभ्युपगमेऽपि दोष एव ।

एकेन वा भवेन्मुक्तिर्यदि वा सर्वकर्मभिः ।
प्रत्येकं चेद्वृथान्यानि सर्वेभ्योऽप्येककर्मता ॥ २५ ॥

सर्वप्रकारस्यापि कर्मण उत्पत्तित एव विशिष्टसाध्याभिसम्बन्धान्न पारिशेष्यसिद्धिः ।

दुरितक्षपणार्थत्वान्न नित्यं स्याद्विमुक्तये ।
स्वर्गादिफलसम्बन्धात्काम्यं कर्म तथैव न ॥ २६ ॥

---

कर्मसाध्यत्वव्यापकभूतोत्पत्त्यादिक्रियाफलाभावान्न कर्मसाध्यत्वमित्युक्तम् । इदानीं मुक्तेः कर्मसाध्यत्वेऽभ्युपगम्यमानेऽपि दोषादनिर्मोक्ष इत्याह कर्मकार्यत्वेति । कथं दोषादनिर्मोक्ष इत्याशङ्क्य किमेकैककर्मनिष्पाद्या मुक्तिः किंवा समस्तकर्मनिष्पाद्येति विकल्प्याद्यं निरस्यति एकेन वेत्यादिना पादत्रयेण । सर्वेषां कर्मणां निरपेक्षसाधनत्वात्कर्मान्तरवैयर्थ्यप्रसङ्ग इत्यर्थः । द्वितीयं पक्षं दूषयति सर्वेभ्य इति । अग्निहोत्रदर्शपूर्णमासचातुर्मास्यपशुसोमादीनां मिलितानां मोक्षसाधनत्वे सत्येकमुमुक्षुनियोगविषयतया एककर्मत्वं प्राप्तं । तच्चायुक्तं फलभेदश्रवणात् । सर्वाश्रमकर्मणामेकेनाश्रमिणानुष्ठातुमशक्यत्वाच्च । प्रत्येकमाश्रमविहितसर्वकर्मभ्यो मोक्ष इति पक्षेऽपि सामग्रीवैचित्र्यात्फलेऽपि वैचित्र्यं स्यान्न तु तद्युक्तं मुक्तेरेकरूपत्वात् । न चोक्तविकल्पदोषदुष्टत्वादन्तःकरणशुद्धिद्वारेण कर्मणां मोक्षं प्रति साधनभूतज्ञानसाधनत्वमपि न स्यादिति शङ्कनीयम् । चिरचिरतरचिरतमत्वाल्पत्वमहत्त्वादिभिः शुद्धेः कालतः स्वरूपतश्च वैचित्र्याभ्युपगमादिति भावः ॥ २५ ॥

ननु नित्यनैमित्तिकानां कर्मणां फलान्तराश्रवणान्मोक्षस्य फलत्वेन साधनाकाङ्क्षत्वादन्योन्याकाङ्क्षया सम्बन्धः पारिशेष्यन्यायेन सिध्यति । एवमन्येषामप्यश्रुतफलानां कर्मणां मोक्षसाधनत्वं सेत्स्यतीत्याशङ्क्याह सर्वप्रकारस्यापीति । विधेरिष्टसाधनरूपत्वात्साध्यस्य चेष्टत्वान्मोक्षस्य चासाध्यत्वादग्निहोत्रं जुहोतीत्याद्युत्पत्तिविधिवाक्यादेव विशिष्टसाध-

**प्रमाणासम्भवाच्च ।**

**साध्यसाधनभावोऽयं वचनात्पारलौकिकः ।**
**नाशेषं मोक्षदं कर्म श्रुतेर्वक्तात्कथञ्चन ॥ २७ ॥**

**अभ्युपगताभ्युपगमाच्च श्वश्रूनिर्गच्छोक्तिवद्भवतो निष्प्रयोजनः प्रलापः ।**

**निषिद्धकाम्ययोस्त्यागस्त्वयापीष्टो यथा मया ।**
**नित्यस्याफलवत्त्वाच्च न मोक्षः कर्मसाधनः ॥ २८ ॥**

---

नत्वप्रतीतेरश्रूयमाणफलकेषु विश्वजिदादिषु स स्वर्गः सर्वान्प्रत्यविशिष्टत्वादिति विश्वजिदधिकरणन्यायेन स्वर्गस्यैव फलत्वेन श्रवणान्न पारिशेष्यन्यायसिद्धिरित्यर्थः । एतदेव श्लोकेन स्पष्टयति दुरितेति । यद्यपि स्वसिद्धान्ते नित्यानां कर्मणां पितृलोकप्राप्तिफलत्वं "कर्मणा पितृलोक" इतिश्रुतेस्तथापि मीमांसकदृष्ट्यपेक्षया "येनकेनचन यजेतापि वा दर्वीहोमेनानुपहतमना एव भवती"तिवाक्यात्तेषां दुरितक्षपणार्थत्वाभ्युपगमान्न मोक्षफलत्वम् । तथा काम्यमपि न मोक्षफलं स्वर्गादिफलसम्बन्धादेवेत्यर्थः ॥ २६ ॥

मोक्षोद्देशेन कर्मणां विधानाभावादपि न तत्साधनत्वमित्याह प्रमाणेति । पारलौकिकः साध्यसाधनभावो वचनाद्भवति वचनं च मोक्षहेतुत्वेन कर्माभिधायकं श्रौतं वा स्मार्त्तं वा नोपलभ्यत इत्यर्थः ॥ २७ ॥

यदुक्तमकुर्वतः क्रियाः काम्या इत्यादि तदस्माभिरभ्युपगतमेव त्वयाप्युक्तं नाधिकमित्याह अभ्युपगतेति । श्वश्रूनिर्गच्छोक्तिवदिति । भिक्षामटते माणवकाय भिक्षां प्रत्याचक्षाणामात्मनः स्नुषां भर्त्सयित्वा श्वश्रूः पुनस्तमाहूय समागते तस्मिन्नास्ति भिक्षा निर्गच्छेति तथैव प्रत्याचष्टे तद्वदित्यर्थः । ननु कर्मणां मोक्षसाधनत्वं त्वयानभ्युपगतमपि मयोक्तमित्यत आह नित्यस्येति । काम्यप्रतिषिद्धयोरभ्युदयप्रत्यवायफलयोस्त्यागान्नैमित्तिकस्य च पापक्षयफलार्थत्वान्नित्यानां च फलरहितत्वान्न मोक्षः कर्मसाधन इति श्लोकार्थः ॥ २८ ॥

एवं ताव“न्मुक्तेः क्रियाभिः सिद्धत्वादि”ति निरस्तोऽयं पक्षः। अथाधुना सर्वकर्मप्रवृत्तिहेतुनिरूपणेन यथावस्थितात्मवस्तुविषयकेवलज्ञानमात्रादेव सकलसंसारानर्थनिवृत्तिरितीमं पक्षं द्रढयितुकाम आह इह चेदं परीक्ष्यते। किं यथा प्रतिषिद्धेषु यादृच्छिकेषु च कर्मसु स्वाभाविकस्वाशयोत्थनिमित्तवशादेवेदं हितमिदमहितमिति परिकल्प्य मृगतृष्णिकोदकपिपासुरिव लौकिकप्रमाणप्रसिद्धान्येव साधनान्युपादाय हितप्राप्तयेऽहितनिरासाय च स्वयमेव प्रवर्त्तते निवर्त्तते च तथैवादृष्टार्थेषु काम्येषु नित्येषु च कर्मसु किंवान्यदेव तत्र प्रवृत्तिनि-

---

वृत्तानुद्रवणपूर्वकं वर्त्तिष्यमाणग्रन्थसन्दर्भस्य तात्पर्यमाह एवं तावदिति। इदानीं सर्वकर्मसु प्रवृत्तौ यो हेतुर्मिथ्याज्ञानादिलक्षणस्तस्य प्रवर्त्तकस्य निरूपणेन कर्मणामविद्याकार्यत्वेन विद्यासाध्याविद्यानिवृत्तिलक्षणे मोक्षेऽनुपयोगात्कर्मसमुच्चिताभ्यासादिनिरपेक्षात्मज्ञानादेव कैवल्यमिति प्रदर्श्यत इत्यर्थः। ननु कथं कर्मसु प्रवृत्तिहेतुर्मिथ्याज्ञानं तेषां यथायोग्यं लौकिकवैदिकप्रमाणमूलत्वादित्याशङ्क्य कर्मप्रवृत्तिनिमित्तहेतुनिरूपणार्थं विमृशति इह चेदमिति। प्रतिषिद्धेषु कलञ्जभक्षणादिषु यादृच्छिकेषु च शयनासनेष्टविहारादिषु स्वाभाविकः शास्त्रज्ञानानाधेयो यः स्वाभिप्रायोऽहमप्राप्तसुखोऽपरिहृतदुःखश्च तेन मम प्राप्यं परिहरणीयं चास्तीति मिथ्याज्ञानम्। तदुत्थनिमित्तं रागादितद्वशात्प्रवृत्तेर्विषयविशेषालम्बनत्वादिदं पुरोवर्त्तिवस्तु हितमनुकूलमहितं प्रतिकूलमिति च कल्पनामात्रेण निश्चित्य स्वयमेव शास्त्रनिरपेक्षं लौकिकप्रमाणसिद्धान्येव च साधनानि साधनत्वेनोपादाय हितप्राप्त्यर्थमहितनिवृत्त्यर्थं च यथा तेषु कर्मसु प्रवर्त्तते निवर्त्तते च तथैवादृष्टार्थेषु कर्मसु काम्येषु नित्येषु च किं प्रवर्त्तत इत्यर्थः। एवं सिद्धान्तहृदयमभिधाय पूर्वपक्षहृदयमाह किंवान्यदिति। शास्त्रादिजनितं सम्यग्ज्ञानं वा तत्र प्रवृत्तिनिमि-

वृत्तिनिमित्तमिति । किञ्चातो यद्येवं शृणु । यदि ताव- द्यथावस्थितवस्तुसम्यग्ज्ञानं प्रमाणभूतं लौकिकमागमिकं वा प्रवृत्तिनिमित्तमिति निश्चयो निवृत्तिशास्त्रं च ना- भ्युपगम्यते तदा हताः कर्मत्यागिनो भ्रान्तिविज्ञानमा- त्रावष्टम्भादलौकिकप्रमाणोपात्तकर्मानुष्ठानत्यागित्वाच्च । अथ मृगतृष्णिकोदकपिपासुप्रवृत्तिनिमित्तवदयथावस्तु- भ्रान्तिविज्ञानमेव सर्वप्रवृत्तिनिमित्तं तदा वर्द्धामहे वयं हताः स्थ यूयमिति ।

हितं सम्प्रेप्सतां मोहादहितं च जिहासताम् ।
उपायान्प्राप्तिहानार्थान् शास्त्रं भासयतेऽर्कवत् ॥२९॥

---

त्तमित्यर्थः । संदिग्धं सप्रयोजनं च विचारमर्हतीति न्यायात्संदेहप्रदर्श- नानन्तरं प्रश्नपूर्वकं प्रयोजनं दर्शयति किञ्चात इत्यादिना । यदि प्रमा- णभूतं सम्यग्ज्ञानमेव प्रवृत्तिनिमित्तं निश्चीयते तदा कर्मत्यागिनो वयं हता इत्यर्थः । प्रमाणभूतत्वे हेतुः सम्यग्ज्ञानमिति । सम्यग्ज्ञानत्वे हेतुः यथावस्थितवस्त्विति । ननु कर्मसु सम्यग्ज्ञानात्प्रवृत्तौ किमिति कर्म- त्यागिनां हतिः सर्वसंन्यासेऽपि सम्यग्ज्ञानेनैव प्रवृत्तिसंभवात्तस्यापि निवृत्तिशास्त्रमूलत्वादित्याशङ्क्याह निवृत्तिशास्त्रं चेति । यावज्जीवा- दिवचनविरोधादनधिकृतान्धपङ्ग्वादिविषयत्वोपपत्तेर्निवृत्तिशास्त्रं ना- भ्युपगम्यत इत्यर्थः । कुतस्तेषां हतत्वमित्यत आह भ्रान्तिविज्ञानेति । आत्मनोऽशनायाद्यतीतत्वे कर्तृत्वाद्यभावे कर्मत्यागे च मूलप्रमाणाभा- वाभिप्रायेण भ्रान्तिविज्ञानमात्रावष्टम्भादित्युक्तमलौकिकं प्रमाणं याव- ज्जीवमग्निहोत्रं जुहुयादिति वैदिकं वचनं तेन विहितकर्मानुष्ठानपरि- त्यागित्वात्तेषां हतिरित्यर्थः । अथेति । यथा मृगतृष्णिकोदकपिपासुप्र- वृत्तिनिमित्तं मिथ्याज्ञानं तथा सर्वकर्मसु प्रवृत्तिनिमित्तं मिथ्याज्ञानमे- वेति यदि निश्चीयते तदा कर्मत्यागिनो वयं वर्धामहे कर्मणि तु प्रवृत्ता यूयं हता भ्रान्तिज्ञानप्रापितप्रवृत्तिमत्त्वादित्यर्थः । एवं संदेहं सप्रयोजनं

**एवं तावत्प्रत्यक्षानुमानागमप्रमाणावष्टम्भादात्मनो निरतिशयसुखहिताव्यतिरेकसिद्धेरहितस्य च षष्ठगोचरवत्स्वत एवानभिसम्बन्धादेवं स्वाभाव्यात्मानवबोधमात्रा-**

---

प्रदर्श्याधुना निर्णयमाह हितं संप्रेप्सतामिति । वैषयिकसुखाभावेऽपि सुषुप्तौ सुखमहमस्वाप्समित्यात्मनः सुखरूपतायाः स्वानुभवसिद्धत्वात्परमप्रेमास्पदत्वेन सुखरूपतानुमाना"द्‌षोऽस्य परम आनन्द" "आत्मैवानन्द" इत्यागमतश्च तस्य नित्यनिरतिशयानन्दस्वभावतासिद्धेरजरममरमभयमशोकमित्यादिश्रुतिभ्यः कूटस्थत्वासङ्गत्वसाक्षित्वादिभ्यश्च स्वभावतः परिहृताशेषानर्थत्वसिद्धेश्चैवंभूतात्मयाथात्म्यानवबोधादेव हितप्रेप्सा दुःखजिहासा च भवति । न पुनः शास्त्रमेव यूयं कर्त्तारो भोक्तारश्च युष्माकं प्राप्यं परिहार्यं चास्ति तस्माद्युष्माभिर्हितं प्रेप्सितव्यमहितं च जिहासितव्यं यूयं वर्णाश्रमवयोवस्थाविशेषवन्त इति कर्त्तृत्वादिकमुत्पादयति बोधयति वा किंतु स्वयमेवाध्यारोपितकर्त्तृत्वभोक्तृत्ववर्णाश्रमवयोवस्थाविशेषवतां पुंसां स्वत एव प्रेप्सितस्य हितस्य जिहासितस्य चाहितस्य प्राप्तये परिहाराय च साधनं जिज्ञासमानानामिदं साध्यमिदं च साधनमिति साध्यसाधनसम्बन्धमात्रं यथावस्थितमर्कवत्प्रकाशयति शास्त्रं न पुनः प्रवृत्तिनिवृत्तिजननेऽपि शास्त्रस्य व्यापारस्तत्र तूदासीनमित्यर्थः ॥ २९ ॥

एवं संक्षेपत इष्टानिष्टसाधनज्ञानाद्रागद्वेषौ भवतस्ततश्च पुरुषस्य प्रवृत्तिनिवृत्ती भवत इति पूर्वश्लोकोक्तमर्थं सोपस्करमनूद्य वर्त्तिष्यमाणग्रन्थस्य तात्पर्यमाह एवं तावदित्यादिना । यद्यपि न पूर्वश्लोके प्रत्यक्षानुमानागमाः कण्ठोक्तास्तथापि प्रेप्साजिहासयोर्मोहहेतुत्वमुपदर्शयतात्मनः सुखस्वभावत्वस्योपदर्शितत्वात्तत्र च प्रमाणान्वेषणे च सौषुप्तिकानुभवलक्षणं प्रत्यक्षं परप्रेमास्पदत्वानुमान"मेषोऽस्य परमानन्द" इत्यादिश्रुतिश्च परिगृह्यते तस्मान्नानुक्तानुवाद इति द्रष्टव्यम् । षष्ठगोचरवदित्यभावप्रमाणगोचरवदित्यर्थः । कुतस्तर्हि प्रवृत्तिरित्यत आह एवं

देव हितं मे स्यादहितं मे माभूदिति मिथ्याज्ञानं तूषर-शुक्तिकानवबोधोत्थमिथ्याज्ञानवत्प्रवृत्तिनिमित्तमिति निर्धारितम् । शास्त्रं च न पदार्थशक्त्याधानकृदित्येतस्यैवोत्तरत्र प्रपञ्च आरभ्यते ।

न परीप्सां जिहासां वा पुंसः शास्त्रं करोति हि ।
निजे एव तु ते यस्मात्पश्वादावपि दर्शनात् ॥ ३० ॥

उक्तं तावदनवबुद्धवस्तुयाथात्म्य एव विधिप्रतिषेधशास्त्रेष्वधिक्रियत इति । अथाधुना विषयस्वभावानुरोधेन प्रवृत्त्यसम्भवं वक्तुकाम आह ।

लिप्सतेऽज्ञानतोऽलब्धं कण्ठे चामीकरं यथा ।
वर्जितं च स्वतो भ्रान्त्या छायायामात्मनो यथा ॥३१॥
भयान्मोहावनद्धात्मा रक्षः परिजिहीर्षति ।
यच्चापरिहृतं वस्तु तथालब्धं च लिप्सते ॥ ३२ ॥

---

स्वाभाव्येति । यथा भूतात्मस्वरूपानवबोधाद्धितं मे स्यादहितं माभूदिति मिथ्याज्ञानं भवति तत्प्रवृत्तिनिमित्तमित्यर्थः । उत्तरार्धार्थमनुवदति शास्त्रं चेति । पदार्थानां शक्तिमात्मनः कर्तृत्वभोक्तृत्वादिशक्तिं स्वर्गादेः साध्यत्वशक्तिं यागादेः साधनत्वशक्तिं नाधत्ते किंतु प्रकाशयत्येवेत्युक्तमित्यर्थः । निजे एव त्विति । शास्त्राधेयविज्ञानं विनैव पश्वादीनामिव तयोः परीप्साजिहासयोः संभवादित्यर्थः ॥ ३० ॥

पूर्वं कर्मप्रवृत्तिहेतुनिरूपणेन कैवल्यस्य कर्मसाध्यत्वं निराकृतमधुना विद्याविषयात्मस्वरूपपर्यालोचनयापि कर्मसु प्रवृत्त्यसम्भवं दर्शयितुमाह उक्तमित्यादिना । तदर्थं प्राप्यस्य परिहार्यस्य च प्रत्येकं द्वैविध्यं दर्शयति लिप्सत इति । स्वतःप्राप्तमेव कण्ठगतं सुवर्णभूषणमज्ञानतोऽप्राप्तं प्राप्तुमिच्छति । यथाविद्यमानत्वादेव स्वत एव वर्जितं स्वकीयच्छायायां

तत्रैतेषु चतुर्षु विषयेषु प्राप्तये परिहाराय च विभज्य न्यायः प्रदर्श्यते ।

प्राप्तव्यपरिहार्येषु ज्ञात्वोपायान् श्रुतेः पृथक् ।
कृत्वाथ प्राप्नुयात्प्राप्यं तथानिष्टं जहात्यपि ॥ ३३ ॥

अथावशिष्टयोः स्वभावतः ।

परिहृतावाप्तयोर्बोधाद्ज्ञानप्राप्ती न कर्मणा ।
मोहमात्रान्तरायत्वाक्रियया ते न सिध्यतः ॥ ३४ ॥

कस्मात्पुनरात्मवस्तुयाथात्म्यावबोधमात्रादेवाभिलषित-

---

भ्रान्त्यारोपितं राक्षसं मोहावृतान्तःकरणो भयात्परिहर्तुमिच्छति । यच्चान्यद्वस्तुतोऽपरिहृतं चौरव्याघ्रादि अलब्धं च वित्तादि तत्परिहर्तुं प्राप्तुं चेच्छतीति द्वयमपि द्विविधं दृश्यत इत्यर्थः ॥ ३१ ॥ ३२ ॥

भवत्वेवं तथापि कस्य कथं प्राप्तिः परिहारो वेत्याकाङ्क्षायामुत्तरश्लोकाभ्यां तत्रोपायः प्रदर्श्यत इत्याह तत्रैतेष्विति । तत्र वस्तुतोऽप्राप्ते स्वर्गादावपरिहृते च नरकादावागमतस्तदुपायान्विभागेन परिज्ञाय तदनन्तरमनुष्ठायानुष्ठानजनितादृष्टवशात्कालान्तरे तत्फलं लभते ॥ ३३ ॥

स्वतस्तु परिहृतावाप्तयोरज्ञानत एव तथा रूपेणाभिमतयोर्बोधादज्ञाननिवृत्त्या प्राप्तिपरिहारौ न तु कर्मणा मोहमात्रस्यैव तत्र प्रतिबन्धकत्वान्न कर्मानुष्ठानसाध्यत्वमित्यर्थः ॥ ३४ ॥

स्यातां नाम स्वतःप्राप्तस्यात्मनः स्वत एव परिहृतस्यानात्मनश्च ज्ञानमात्रादेव प्राप्तिपरिहारौ निरतिशयानन्दलक्षणस्य निरस्ताशेषानर्थलक्षणस्य च मोक्षस्य कथं ज्ञानादेव सिद्धिस्तथाभूतस्य मोक्षस्य संसारदशायामनुपलम्भात्साध्यत्वप्रतीतेरिति शङ्कायामुत्तरश्लोकेनोत्तरमुच्यत इत्याह कस्मादिति । यद्वा । शुक्तिकादिनिकटोपसर्पणादिक्रियया रजतादिविभ्रमाणां तत्कारणाज्ञाननिवृत्त्या निवृत्तिदर्शनादात्माज्ञाननिवृत्तिरपि कर्मणा किं न स्यादित्याशङ्क्य परिहरति कस्मादित्यादिना । उ-

निरतिशयसुखावाप्तिनिःशेषदुःखनिवृत्ती भवतो न तु कर्मणेति । उच्यते ।

कर्माज्ञानसमुत्थत्वान्नालं मोहापनुत्तये ।
सम्यग्ज्ञानं विरोध्यस्य तामिस्रस्यांशुमानिव ॥ ३५ ॥

नन्वात्मज्ञानमप्यविद्योपादानं नहि शास्त्रशिष्याचार्याद्यनुपादायात्मज्ञानं लभत इति । नैष दोषः । यत आत्मज्ञानं हि स्वतःसिद्धपरमार्थात्मवस्तुस्वरूपमात्राश्रयादेवाविद्यातदुत्पन्नकारकग्रामप्रध्वंसि स्वात्मोत्पत्तावेव शास्त्राद्यपेक्षते नोत्पन्नमविद्यानिवृत्तौ । कर्म पुनः स्वात्मोत्पत्तावुत्पन्नं च । नहि क्रिया कारकनिस्पृहा कल्पकोटि-

---

फलक्षणस्य मोक्षस्यात्मस्वभावत्वेऽप्यज्ञानपिहितत्वात्संसारदशायामप्रतिभासो न तु तस्य तदानीमभावात् । पूर्वोक्तप्रत्यक्षादिना प्रमाणेन तत्स्वभावनिर्धारणात्तस्य चाज्ञानस्य ज्ञानादेव निवृत्तिस्तथा लोके दृष्टत्वात् । निकटोपसर्पणादेस्तु न साक्षादज्ञाननिवर्त्तकत्वं सम्यग्ज्ञानोत्पत्तिमात्रकारणत्वेनान्यथासिद्धत्वात् । तत्रस्थस्यैवाधिष्ठानावलोकने च कदाचिद्भ्रमनिवृत्तेर्निकटोपसृप्तस्याधिष्ठानानवलोकने भ्रमानिवृत्तेश्चेति भावः ॥ ३५ ॥

अज्ञानोत्थत्वाच्चेत्कर्मणामविद्यानिवृत्तावहेतुत्वं तर्हि विद्याया अपि तदुत्थत्वाविशेषात्तन्निवर्त्तकत्वं न स्यादिति शङ्कते नन्विति । कुतस्तस्याविद्योपादानत्वमित्यत आह नहीति । अविद्याकार्यत्वाविशेषेऽपि परमार्थवस्त्वालम्बनत्वेन विषयतो विरोधादविद्यानिवर्त्तकत्वं न विरुध्यत इति परिहरति नैष दोष इति । तत्राजडसत्यात्मविषयतया जडानृतानात्मविषयाविद्याविरोधितामाह स्वतःसिद्धेति । आत्मनां परस्परभेदेन ब्रह्मणो भेदेन च विद्याविषयत्वाद्द्वैतविरोधाभावमाशङ्क्याह वस्तुस्वरूपेति । द्वैतविषयत्वेनाद्वैतविषयत्वेन चाविद्याविद्ययोर्विरोधोऽ-

व्यवहितफलदानाय स्वात्मानं बिभर्त्ति साध्यमानमात्ररूपत्वात्तस्याः । न च क्रियात्मज्ञानवत्स्वात्मप्रतिलम्भकाल एव स्वर्गादिफलेन कर्त्तारं सम्बध्नाति । आत्मज्ञानं पुनः पुरुषार्थसिद्धौ नोत्पद्यमानस्वरूपव्यतिरेकेणान्यद्रूपान्तरं साधनान्तरं वापेक्षते । कुत एतद्यतः ।

बलवद्धि प्रमाणोत्थं सम्यग्ज्ञानं न बाध्यते ।
आकाङ्क्षते न चाप्यन्यद्बाधनं प्रति साधनम् ॥ ३६ ॥

---

स्तीत्यर्थः । ननु विभ्रमेऽप्यधिष्ठानस्य सामान्येन स्फुरणात्तदालम्बनत्वमविद्यायां विद्यते तस्मादेकविषयत्वान्न विषयतो विरोध इत्याशङ्क्याह मात्रेति । आश्रयादालम्बनत्वाद्विषयीकरणादिति यावत् । पूर्वं विषयतो वैलक्षण्यमुक्तमिदानीं विद्या स्वजन्मन्येवाविद्याद्यपेक्षते न तु फले कर्म पुनः स्वजन्मनि फले चाविद्यामपेक्षत इति वैलक्षण्यान्तरमाह स्वात्मोत्पत्ताविति । किमिति फले कर्माविद्यामपेक्षत इत्यत आह न हि क्रियेति । कालान्तरभाविफलदानाय तिष्ठन्ती क्रिया कारकाद्यपेक्षयैव तिष्ठतीत्यर्थः । ननु किमिति कारकमाश्रित्यैव तिष्ठति न स्वातन्त्र्येणैव तिष्ठतीत्यत आह साध्यमानेति । परतन्त्रस्वरूपत्वात्क्रियाया इत्यर्थः । ननु तर्हि स्वोत्पत्तिकाल एव कर्मापि फलजनकमस्त्वित्याशङ्क्यानुभवविरोधान्नैवमित्याह न च क्रियेति । ननु तर्ह्यात्मज्ञानमपि कर्मापेक्षयाभ्यासद्वारेण वा कैवल्यं चिरेण साधयेदित्यत आह आत्मज्ञानमिति । रूपान्तरशब्देनाभ्यास उच्यते साधनान्तरशब्देन च कर्म । नन्वात्मज्ञानस्याप्यनपेक्षत्वमयुक्तमनादिकालप्रवृत्तद्वैतदर्शनतत्संस्काराभ्यां बाधपरिहारायाभ्यासादिसापेक्षत्वादित्याक्षिप्योत्तरश्लोकेन समाधत्ते कुत एतदित्यादिना । प्रमाणोत्थत्वाद्बलवत्सम्यग्ज्ञानमप्रमाणोत्थद्वैतदर्शनतत्संस्काराभ्यां न बाध्यत इत्यर्थः । तर्हि द्वैतदर्शनतत्संस्कारयोर्बाधनार्थं सम्यग्ज्ञानमभ्यासादिकमपेक्षतामित्यत आह आकाङ्क्षत इति ॥ ३६ ॥

स्वपक्षस्य हेत्ववष्टम्भेन समर्थितत्वान्निराशङ्कमुपसंह्रियते ।

तस्माद्दुःखोदधेर्हेतोरज्ञानस्यापनुत्तये ।
सम्यग्ज्ञानं सुपर्याप्तं क्रिया चेन्नोक्तहेतुतः ॥ ३७ ॥

ननु बलवदपि सम्यग्ज्ञानमपि सदप्रमाणोत्थेनासम्यग्ज्ञानेन बाध्यमानमुपलभामहे यत उत्पन्नपरमार्थबोधस्यापि कर्तृत्वभोक्तृत्वरागद्वेषाद्यनवबोधोत्थप्रत्यया आविर्भवन्ति । न ह्यबाधिते सम्यग्ज्ञाने तद्विरुद्धानां प्रत्ययानां सम्भवोऽस्ति । नैतदेवम् । कुतः ।

बाधितत्वादविद्याया विद्यां सा नैव बाधते ।
तद्वासना निमित्तत्वं यान्ति विद्यास्मृतेर्ध्रुवम् ॥ ३८ ॥

---

एवं ज्ञानमेव कैवल्ये साधनं न कर्मेत्युपपादितमर्थमुपसंहरति स्वपक्षस्येति । दुःखहेतुभूताज्ञानापनुत्तये सम्यग्ज्ञानमेव पुष्कलकारणमित्यर्थः । उक्तहेतुत इति । अज्ञानसमुत्थत्वोत्पाद्यफलत्वादिहेतुभ्य इत्यर्थः ॥ ३७ ॥

ननु बलवद्धि प्रमाणोत्थमित्यनेन श्लोकेनानन्यापेक्षचैतन्यप्रकाशात्मस्वरूपावगाहित्वेन वस्तुबलप्रवृत्तत्वादपौरुषेयवेदान्तवाक्यजन्यज्ञानस्य सकलसंसारकारणभूताज्ञाननिवर्त्तकत्वमुपपद्यते । तत एवानादिकालप्रवृत्तदृढतरकर्त्तृत्वादिमिथ्यावभासनिवर्त्तकत्वमुपपद्यते न च तन्निवृत्तौ स्वव्यतिरिक्तमभ्यासादिसाधनान्तरमपेक्षत इत्युक्तम् । तत्र बलवत्त्वात्सम्यग्ज्ञानस्याबाध्यत्वमित्यत्रानुभवविरोधं शङ्कते ननु बलवदपीति । ननु कर्त्तृत्वादिप्रत्ययानुवृत्तिमात्रेण कथं बाधोऽवगम्यत इत्यत आह नहीति । बाधितस्य बाधकत्वानुपपत्तेर्नैवमिति परिहरति नैतदेवमिति । प्रमाणज्ञानस्य स्वसामग्रीत एवोत्पन्नत्वात्तस्य चाज्ञानबाधकत्वादज्ञानबाध्यैव विपर्ययज्ञानस्यापि तदात्मकत्वेन बाधित-

"कर्माज्ञानसमुत्थत्वादि"त्युक्तो हेतुस्तस्य च समर्थनं
र्वमेवाभिहितं "हितं सम्प्रेप्सतामि"त्यादिना । तदभ
न्वयार्थमविद्यान्वयेन च संसारान्वयित्वं प्रदर्शयिष्यामी
त्यत आह ।

ब्राह्मण्याद्यात्मके देहे लात्वा नात्मेति भावनाम् ।
श्रुतेः किङ्करतामेति वाङ्मनःकायकर्मसु ॥ ३९ ॥

यस्मात्कर्माज्ञानसमुत्थमेव तस्मात्तद्व्यावृत्तौ निवर्त्त
इति । उच्यते ।

---

त्वान्न विपर्ययज्ञानेन सम्यग्ज्ञानबाधः सम्भवतीत्यर्थः । अस्तु तर्हि बा
कालादुत्तरकालमुत्पन्नैर्द्वैतप्रत्ययैर्विद्याया बाध इत्याशङ्क्य तस्मिन्न
काले बाधकविद्यासंस्कारजनितप्रत्ययानां बलवत्त्वात्तेषामेव द्वैतप्र
यबाधकत्वोपपत्तेर्नैवमित्याह तद्वासनानिमित्तत्वमिति । यद्वा । तः
सना इत्यविद्यावासनाः कथ्यन्ते ता अपि स्मृतिं विदुषो जनयन्ति तत
न द्वैतस्मृतिभिरपि विद्याया बाध इत्यर्थः ॥ ३८ ॥

वृत्तानुकीर्त्तनपूर्वकं वर्त्तिष्यमाणाविद्यान्वयग्रन्थस्य तात्पर्यमाह
र्माज्ञानेति । अज्ञानसमुत्थत्वात्कर्माज्ञाननिवर्त्तकं न भवतीत्युक्तम् । इ
नीमध्यासपूर्वककर्माधिकारहेतुत्वादपि कर्मणामज्ञाननिवर्त्तकत्वं नास्
ति युक्त्यन्तरप्रदर्शनाय श्लोकारम्भ इत्यर्थः । प्रदर्शयिष्यामीत्यत आहे
प्रदर्शयिष्यामीत्यतो हेतोराह एतदर्थमाहेति यावत् । ब्राह्मण्याद्यात्म
इति । वर्णाश्रमवयोवस्थाविशेषवति देहे । ना पुरुष आत्मेतिभाव
लात्वा समादायेत्यविद्यान्वयो दर्शितः । सांप्रतं तदधीनं कर्तृत्वभो
त्वादिसंसारान्वयं दर्शयति श्रुतेरिति । किङ्करतां तन्नियोगात्तदु
कारिताम् । ततश्च कर्मणामविद्याविनाभूतत्वान्नाविद्यानिवर्त्तकत्वा
त्यर्थः ॥ ३९ ॥

एवमन्वयमुक्त्वा तद्व्यतिरिक्ते कर्मव्यतिरेकमाख्यातुमुत्तरश्लोक

दग्धाखिलाधिकारश्चेद्ब्रह्मज्ञानाग्निना मुनिः ।
वर्त्तमानः श्रुतेर्मूर्ध्नि नैव स्याद्वेदकिङ्करः ॥ ४० ॥

अथेतरो घनतराविद्यापटलसंवीतान्तःकरणोऽङ्गीकृतकर्तृत्वाद्यशेषकर्माधिकारकारणो विधिप्रतिषेधचोदनासन्देशोपदिष्टः कर्मसु प्रवर्त्तमानः ।

शुभैः प्राप्नोति देवत्वं निषिद्धैर्नारकीं गतिम् ।
उभाभ्यां पुण्यपापाभ्यां मानुष्यं लभतेऽवशः ॥ ४१ ॥

आब्रह्मस्तम्बपर्यन्ते घोरे दुःखोदधौ घटीयन्त्रवदारोहावरोहन्यायेनाधममध्यमोत्तमसुखदुःखमोहविद्युच्चपलसम्पातदायिनीर्विचित्रयोनीश्चण्डोत्पिञ्जलकश्वसनवेगाभिहताम्भोधिमध्यवर्त्तिशुष्कालाबुवच्छुभाशुभव्यामिश्रकर्मवायुसमीरितः ।

---

त्याह यस्मादिति । दग्धेति । अधिक्रियते कर्मण्यनेनेत्यधिकारो ब्राह्मण्याद्यभिमानः । वर्त्तमानः श्रुतेर्मूर्ध्नि प्रतिपाद्यतया ब्रह्मरूपेण ॥ ४० ॥

यः पुनर्वेदकिङ्करोऽविद्यान्वयेन संसारान्वयी दर्शितस्तस्य संसारप्रकारं वैराग्योत्पादनायाह अथेतर इति । अङ्गीकृतं कर्त्तृत्वभोक्तृत्वब्राह्मण्यादिलक्षणं कर्माधिकारे कारणं येन स तथोक्तः । विधिप्रतिषेधचोदनाभ्यां परिगृहीतश्चोदनाविषये कर्मणि प्रवर्त्तमानः पूर्वं पूर्वमुत्तरस्योत्तरस्य हेतुः शुभैरिति । "पुण्येन पुण्यं लोकं जयति पापेन पापमुभाभ्यामेव मनुष्यलोकमि"त्यस्याः श्रुतेरर्थोऽनेन व्यक्तीकृतः । अवशः कामकर्मादिपरतन्त्र इत्यर्थः ॥ ४१ ॥

उत्तरश्लोकगतस्यैवंशब्दस्यापेक्षितमर्थं प्रदर्शयन्नेव संसारगतिमेव प्रदर्शयन्संसारमेव प्रपञ्चयति आब्रह्मेति । योनीश्चङ्क्रम्यमाण इति श्लोकगतेन पदेन सम्बन्धः । ता एव योनीर्विशिनष्टि अधमेति । अधममध्यमोत्तमा ये सुखदुःखमोहास्तेषां विद्युच्चपलो यः संपातः संपर्कस्तं दातुं

एवं चङ्क्रम्यमाणोऽयमविद्याकामकर्मभिः ।
पाशितो जायते कामी म्रियते चासुखावृतः ॥ ४२

यथोक्तेऽर्थ आदरविधानाय प्रमाणोपन्यासः ।

श्रुतिश्चेमं जगादार्थं कामस्य विनिवृत्तये ।
तन्मूला संसृतिर्यस्मात्तन्नाशोऽज्ञानहानतः ॥ ४३

का त्वसौ श्रुतिरिति चेत् ।

"यदा सर्वे प्रमुच्यन्त" "इति न्वि"ति च वाजिनः
कामबन्धनमेवेदं व्यासोऽप्याह पदे पदे ॥ ४४ ॥

---

शीलं यासां योनीनां तास्तथोक्तास्ता एव विचित्रा देवतिर्यङ्गरादि[illegible]
देन । चङ्क्रमणे दृष्टान्तमाह चण्डेति । उत्पिञ्जलक आकुलः । चण्डश्च
सावुत्पिञ्जलकश्चेति चण्डोत्पिञ्जलकः । श्वसनो वायुस्तस्य वेगेनाभि
हतो योऽम्भोनिधिस्तन्मध्यवर्त्ति यच्छुष्कालाबु तद्यथातिशयेन भ्रमा
तद्वच्छुभमशुभं तदुभयव्यामिश्रं च यत्कर्म स एव वायुस्तेन समीरि
प्रेरितः । न क्वापि निर्वृत्तिमुपलभमानस्तिष्ठतीति पाशितो बद्धः का
जायत इति ॥ ४२ ॥

कामस्य प्राधान्येन संसारकारणत्वमुक्तम् । तत्र श्रुतिस्मृती प्रम
णमिति दर्शयितुमाह यथोक्त इति । यस्मात्काममूला संसृतिस्तस्मात्त
विनिवृत्तये श्रुतिर्जगादेत्यन्वयः । कथं तर्हि तन्निवृत्तिरित्यत आह त
न्नाश इति ॥ ४३ ॥

"यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्य
ऽमृतो भवत्यत्र ब्रह्म समश्नुते" "इति नु कामयमानो योऽकामो निष्का
आत्मकाम आप्तकामो न तस्य प्राणा उत्क्रामन्ति" "अत्रैव समवली
यन्ते" "ब्रह्मैव सन्ब्रह्माप्येती"ति वाजसनेयिन आहुरित्यन्वयः । "क
मबन्धनमेवेदं नान्यदस्तीह बन्धनम् । कामबन्धनमुक्तो हि नेह भूयो
ऽभिजायत" इत्यादिनापि कामस्य संसारकारणत्वं स्मर्यत इत्यर्थः ॥४४

एष संसारपन्था व्याख्यातोऽथेदानीं तद्व्यावृत्तये कर्माण्यारादुपकारकत्वेन यथा मोक्षहेतुतां प्रतिपद्यन्ते तथाभिधीयते ।

तस्यैवं दुःखतप्तस्य कथञ्चित्पुण्यशीलनात् ।
नित्येहाक्षालितधियो वैराग्यं जायते हृदि ॥ ४५ ॥

कीदृग्वैराग्यमुत्पद्यत इति । उच्यते ।

नरकाद्भीर्यथास्याभूत्तथा काम्यफलादपि ।
यथार्थदर्शनात्तस्मान्नित्यं कर्म चिकीर्षति ॥ ४६ ॥

एवं नित्यनैमित्तिककर्मानुष्ठानेन ।

शुध्यमानं तु तच्चित्तमीश्वरार्पितकर्मभिः ।
वैराग्यं ब्रह्मलोकादौ व्यनक्त्यथ सुनिर्मलम् ॥ ४७ ॥

---

एवं तावत्कामस्य संसारकारणत्वमुक्तं तस्य च तन्नाशोऽज्ञानहानत इति ज्ञानादज्ञाननिवृत्त्या निवृत्तिरप्युक्ता। का त्वसौ श्रुतिरितिचेद्यदा सर्वेति कामबन्धनमेवेदमिति च तत्र सर्वथा कर्मणामनुपयोगशङ्कायामुपयोगप्रकारप्रदर्शनायोत्तरग्रन्थ इत्याह एष संसारेति । तस्यैवमिति । पुण्यशीलस्य दुर्लभतां दर्शयति कथञ्चिदिति । काम्ये पुण्येऽप्यानुषङ्गिकी शुद्धिरस्ति ततो नित्यानुष्ठाने बुद्धिरुत्पद्यते । एवं नित्येहया नित्यकर्मानुष्ठानेन विशुद्धबुद्धेः काम्यकर्मफलेषु वैराग्यं जायत इत्यर्थः ॥ ४५ ॥

कीदृग्वैराग्यमुत्पद्यत इत्युच्यते नरकाद्भीरिति । ननु प्रतिषिद्धकर्मफलान्नरकादिव किमिति काम्यकर्मफलात्स्वर्गात्सुखरूपाद्भयं जायत इत्यत आह यथार्थेति । काम्यकर्मफलस्यानित्यत्वसातिशयत्वदुःखबहुलत्वादिदोषदर्शनात्काम्यकर्मनिमित्तमपि भयं जायत इत्यर्थः । यस्माद्भयं जातं तस्मात्काम्यकर्मभ्यो व्यावृत्तः पुनस्तदेव नित्यं कर्म तात्पर्येणानुष्ठातुमिच्छतीत्यर्थः ॥ ४६ ॥

भवत्वेवं काम्यकर्मपरित्यागेन नित्यनैमित्तककर्मणामेवानुष्ठानं तथा-

यस्माद्रजस्तमोमलोपसंसृष्टमेव चित्तं कामबडिशेनाकृष्य विषयदुरन्तसूनास्थानेषु निक्षिप्यते तस्मान्नित्यनैमित्तिककर्मानुष्ठानपरिमार्जनेनापविद्धरजस्तमोमलं प्रसन्नमनाकुलं सम्मार्जितस्फटिकशिलाकल्पं बाह्यविषयहेतुकेन च रागद्वेषात्मकेनातिग्रहबडिशेनानाकृष्यमाणं विधूताशेषकल्मषं प्रत्यङ्मात्रप्रवणं चित्तदर्पणमवतिष्ठते । अत इदमभिधीयते ।

व्युत्थिताशेषकामेभ्यो यदा धीरवतिष्ठते ।
तदैव प्रत्यगात्मानं स्वयमेवाविविक्षति ॥ ४८ ॥

---

पि केन द्वारेण तेषां मोक्षहेतुत्वमित्यत आह एवं नित्येति । चित्तशुद्धिवैराग्योत्पादनद्वारेणेत्यर्थः । शुध्यमानं त्विति स्पष्टम् ॥ ४७ ॥

ननु किमत्र वैराग्येण तस्य मोक्षसाधनत्वेन तत्सहकारित्वेन वा श्रवणादित्याशङ्क्य रागस्य मोक्षोपायप्रवृत्तिप्रतिबन्धकत्वात्तत्प्रतिबन्धकरागाभावतया वैराग्यस्य मोक्षप्रवृत्तिहेतुतामुपपत्तिपुरःसरं दर्शयति यस्मादित्यादिना । रजस्तमसी एव हेयत्वान्मलवन्मलं तेन मलेनोपसंसृष्टमपहृतं कलुषीकृतमन्तःकरणं कामाख्येन बडिशवदाकर्षकत्वाद्बडिशेनाकृष्य विषयप्रवणं विधाय विषयाः शब्दादय एव दुरन्तानि सूनास्थानानि विषयपराणां पुनःपुनर्जन्ममरणादिहेतुत्वात्तेषु मत्स्यादिवन्निक्षिप्यते यस्मात्तस्मान्नित्यानुष्ठानात्तथाभूतप्रतिबन्धक्षये यथोक्तविशेषणं चित्तदर्पणं प्रत्यङ्मात्रप्रवणमवतिष्ठत इत्यन्वयः । अपविद्धरजस्तमोमलं व्यावृत्तरजस्तमोमलमत एव प्रसन्नमनाकुलमचलम् । प्रसन्नतायां दृष्टान्तमाह सम्मार्जितेति । अत एव बाह्याः शब्दादयो विषयास्तद्धेतुकौ यौ रागद्वेषौ तल्लक्षणेनातिग्रहबडिशेन विषयान्प्रत्यनाकृष्यमाणम् । अत्र च सकामेनातिग्रहेण गृहीत इति कामस्यातिग्रहत्ववचनादस्य दोषोपलक्षणार्थत्वाद्रागद्वेषयोरतिग्रहात्मकत्वम् । तत्रानाकृष्यमाणत्वे हेतुर्विधूतेति । आविविक्षत्याभिमुख्येन प्रवेष्टुमिच्छतीत्यर्थः ॥ ४८ ॥

अतःपरमवसिताधिकाराणि कर्माणि प्रत्यक्प्रवणत्वसूनौ कृतसम्प्रत्तिकानि चरितार्थानि सन्ति ।

प्रत्यक्प्रवणतां बुद्धेः कर्माण्युत्पाद्य शुद्धितः ।
कृतार्थान्यस्तमायान्ति प्रावृडन्ते घना इव ॥ ४९ ॥

यतो नित्यकर्मानुष्ठानस्यैष महिमा ।

तस्मान्मुमुक्षुभिः कार्यमात्मज्ञानाभिलाषिभिः ।
नित्यं नैमित्तिकं कर्म सदैवात्मविशुद्धये ॥ ५० ॥

यथोक्तेऽर्थे सर्वज्ञवचनं प्रमाणम् ।

"आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।
योगारूढस्य तस्यैव शम" एवेति च स्मृतिः ॥ ५१ ॥

---

एवं शुद्धान्तःकरणस्योत्पन्नवैराग्यस्य सर्वकर्मसंन्यासेऽधिकार इत्यभिप्रेत्याह अतःपरमिति । "यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितमि"ति वचनात्कर्मप्रवृत्तिनिमित्तस्य कामस्य निवृत्तत्वात्कर्माण्यवसिताधिकाराण्युच्यन्ते । प्रत्यक्प्रवणत्वसूनौ कृतसंप्रत्तिकानि संप्रत्तिर्नाम स्वव्यापाराणां पुत्रे सम्प्रदानं समर्पणमत एव चरितार्थानि कृतप्रयोजनान्यस्तमायान्तीति श्लोकगतेन पदेन सम्बन्धः । प्रत्यगिति । कर्माणि बुद्धेः शुद्ध्युत्पादनद्वारेण तस्याः प्रत्यक्प्रवणतामुत्पाद्य कृतार्थानि सन्त्यस्तमायान्तीत्यर्थः ॥ ४९ ॥

एवं कर्मणामन्तःकरणशुद्धिद्वारेण प्रत्यक्प्रवणताहेतुत्वादस्त्येव मुक्तावुपयोग इत्युपसंहरति यत इति ॥ ५० ॥

कर्मणां मुक्तावाराढुपकारकत्वं न तु साक्षादित्युक्तम् । तस्मिन्नर्थे भगवद्वचनं प्रमाणमित्याह यथोक्त इति । आरुरुक्षोः सम्यग्दर्शनसाधनं ध्यानयोगमारोढुमिच्छोस्तदनुष्ठानासमर्थस्य कर्म नित्यं नैमित्तिकं कारणं तदनुष्ठानसामर्थ्योत्पादकमुच्यते श्रुतिभिः स्मृतिभिश्च । योगमारू-

नित्यकर्मानुष्ठानाद्धर्मोत्पत्तिर्धर्मोत्पत्तेः पापहानिस्ततश्चित्तशुद्धिस्ततः संसारयाथात्म्यावबोधस्ततो वैराग्यं ततो मुमुक्षुत्वं ततस्तदुपायपर्येषणं ततः सर्वकर्मतत्साधनसंन्यासस्ततो योगाभ्यासस्ततश्चित्तस्य प्रत्यक्प्रवणता ततस्तत्त्वमस्यादिवाक्यार्थपरिज्ञानं ततोऽविद्योच्छेदस्ततश्च स्वात्मन्येवावस्थानं "ब्रह्मैव सन् ब्रह्माप्येति" "विमुक्तश्च विमुच्यत" इति ।

पारम्पर्येण कर्मैवं स्यादविद्यानिवृत्तये ।
ज्ञानवन्नाविरोधित्वात्कर्माविद्यां निरस्यति ॥ ५२ ॥

न च कर्मणः कार्यमण्वपि मुक्तौ सम्भाव्यते नापि मुक्तौ यत्सम्भवति तत्कर्मापेक्षते । तदुच्यते ।

---

ढस्य योगमनुष्ठातुं समर्थस्य शमः कारणमुपशमः संन्यासः कारणम् । योगावाप्तौ च साधनमिति वदन्परम्परयैव कर्मणां मोक्षोपयोगं दर्शयतीत्यर्थः ॥ ५१ ॥

कर्मणां पारम्पर्येण मुक्तावुपयोगो दर्शितस्तदेव पारम्पर्यमिदानीं दर्शयति नित्यकर्मेति । धर्मोत्पत्तिरदृष्टोत्पत्तिः । पापहानिः "धर्मेण पापमपनुदती"ति श्रुतेः । चित्तशुद्धिश्चित्तस्य विवेकक्षमता । याथात्म्यावबोधोऽनित्यत्वादिदोषदर्शनम् । योगाभ्यासः श्रवणमनननिदिध्यासनादीनामनुष्ठानम् । अत्र चित्तस्य प्रत्यक्प्रवणता नाम प्रत्यगात्मन्येवाप्रयत्नेनावस्थानम् । कर्मसंन्यासस्य हेतुत्वेन पूर्वोदिता तु प्रत्यक्प्रवणता प्रत्यगात्मविविदिषामात्ररूपेति न पूर्वापरविरोधः । वाक्यार्थपरिज्ञानं साक्षात्कारलक्षणम् । स्वात्मन्यवस्थानमित्यत्र प्रमाणमाह ब्रह्मैवेति । ननु कर्म साक्षादेवाविद्यानिवर्त्तकं किं न स्यादित्यत आह ज्ञानवदिति ॥ ५२ ॥

कर्मणः साक्षान्मोक्षसाधनत्वाभावे युक्त्यन्तरमाह न चेति । कर्मफल-

उत्पाद्यमाप्यं संस्कार्यं विकार्यं च क्रियाफलम् ।
नैवं मुक्तिर्यतस्तस्मात्कर्म तस्या न साधनम् ॥ ५३ ॥

एवं तावत्केवलं कर्म साक्षादविद्यापनुत्तये न पर्याप्तमिति प्रपञ्चितम् । मुक्तौ च मुमुक्षुज्ञानतद्विषयस्वाभाव्यानुरोधेन सर्वप्रकारस्यापि कर्मणोऽसम्भव उक्तो "हितं सम्प्रेप्सतामि"त्यादिना । यादृशश्चारादुपकारकत्वेन ज्ञानोत्पत्तौ कर्मणां समुच्चयः सम्भवति तथा प्रतिपादितम् । अविद्योच्छित्तौ तु लब्धात्मस्वभावस्यात्मज्ञानस्यैवासाधारणं साधकतमत्वं नान्यस्य प्रधानभूतस्य गुणभूतस्य चेत्येतदधुनोच्यते । तत्र ज्ञानं गुणभूतं तावदहेतुरित्येतदाह ।

सन्निपत्य न च ज्ञानं कर्माज्ञानं निरस्यति ।
साध्यसाधनभावत्वादेककालानवस्थितेः ॥ ५४ ॥

---

स्योत्पाद्यादेर्मुक्तावसम्भवात्सम्भवतश्च स्वरूपेणावस्थानस्य कर्मानपेक्षत्वाच्च मुक्तेः कर्मसाध्यत्वमित्यर्थः ॥ ५३ ॥

वृत्तकीर्त्तनपूर्वकं वर्त्तिष्यमाणग्रन्थसंदर्भस्य तात्पर्यमाह एवं तावदिति । अनित्यफलाद्विरक्तत्वं मुमुक्षुस्वभावः । ज्ञानस्य प्रमाणवस्तुपरतन्त्रतयाविद्यानिवर्त्तकत्वं स्वभावः । ज्ञानविषयस्य चात्मनः कूटस्थत्वेनासाध्यत्वं स्वभावः । पूर्वं केवलकर्मणां मुक्तिसाधनत्वं निराकृतमिदानीं ज्ञानेनाङ्गाङ्गिभावेन समप्रधानतया वा समुच्चितस्य मुक्तिसाधनत्वं न सम्भवतीत्युच्यत इत्यर्थः । एवं समुदायतात्पर्यमभिधायाधुना समनन्तरश्लोकतात्पर्यमाह तत्रेति । ज्ञानं गुणभूतं कर्म प्रधानमित्येतत्पक्षनिरासायोत्तरश्लोकारम्भ इत्यर्थः । सन्निपत्येति । कर्मणोऽङ्गत्वेन ज्ञानं कर्म सन्निपत्य प्राप्याविद्यां न निरस्यति कुत इत्यत आह साध्यसाध-

समप्रधानयोरप्यसम्भव एव ।

बाध्यबाधकभावाच्च पञ्चास्योरणयोरिव ।
एकदेशानवस्थानान्न समुच्चयता तयोः ॥ ५५ ॥

कुतो बाध्यबाधकभावः । यस्मात् ।

अयथावस्त्वविद्या स्याद्विद्या तस्या विरोधिनी ।
समुच्चयस्तयोरेवं रविशार्वरयोरिव ॥ ५६ ॥

तस्मादकारकब्रह्मात्मनि परिसमाप्तावबोधस्याशेषकर्मचोदना नाम चोद्यस्वाभाव्यात्कुण्ठिताः । कथं तत् । अभिधीयते ।

बृहस्पतिसवे यद्वत्क्षत्रियो न प्रवर्त्तते ।
ब्राह्मणत्वाद्यहम्मानी विप्रो वा क्षत्रकर्मणि ॥ ५७ ॥

---

नेति । कर्मणोऽन्तःकरणशुद्धिद्वारेण ज्ञानसाधनत्वात्साध्येन ज्ञानेन सहैककालानवस्थितेर्नाङ्गाङ्गिभावः । तत्साध्यस्य तदङ्गत्वादृष्टेरेकप्रयोगानारूढत्वाज्जन्मान्तरानुष्ठितस्यापि कर्मणो ज्ञानसाधनत्वाङ्गीकाराच्चेत्यर्थः ॥ ५४ ॥

इदानीं समसमुच्चयनिरासायाह समप्रधानयोरिति । पञ्चास्यः सिंहः उरणो मेषः । एकदेश एकस्मिन्नाश्रयेऽनवस्थानान्न समप्रधानतापि तयोरित्यर्थः ॥ ५५ ॥

उक्तस्यैव बाध्यबाधकभावहेतोः समर्थनायाह कुत इति । अयथावस्त्विति । परमार्थात्मवस्तुविषयं ज्ञानम् । अविद्याध्यारोपितमिथ्याकर्तृत्वाद्यभिमानसम्बन्धनिमित्तं कर्माविद्या । तयोरेवमितरेतरबाध्यबाधकभावेन वर्तमानयोर्ज्ञानकर्मणोः प्रकाशतमसोरिव विरुद्धः समुच्चय इत्यर्थः ॥ ५६ ॥

तस्मान्न ज्ञानिनः कर्मनियोगविषयत्वमित्युपसंहरति तस्मादिति । अकारकब्रह्मात्मावबोधोन्मूलितकर्माधिकारसम्बन्धस्याकर्त्रात्माभिमान-

यथायं दृष्टान्त एवं दार्ष्टान्तिकोऽपीत्यत आह।

विदेहो वीतसन्देहो नेतिनेत्यवशेषितः।
देहाद्यनात्मदृक्तद्वत्तक्रियां वीक्षतेऽपि न॥ ५८॥

तस्यार्थस्याविष्करणार्थमुदाहरणम्।

मृत्स्नेभके यथेभत्वं शिशुरध्यस्य वल्गति।
अध्यस्यात्मनि देहादीन्मूढस्तद्वद्विचेष्टते॥ ५९॥

न च वयं ज्ञानकर्मणोः सर्वत्रैव समुच्चयं प्रत्याचक्ष्महे। यत्र प्रयोज्यप्रयोजकभावो ज्ञानकर्मणोस्तत्र नास्माभि-र्त्रापि शक्यते निवारयितुम्। तत्र विभागप्रदर्शनायो-दाहरणं प्रदर्श्यते।

स्थाणुं चोरधियालाय भीतो यद्वत्पलायते।
बुद्ध्यादिभिस्तथात्मानं भ्रान्तोऽध्यारोप्य चेष्टते॥६०॥

---

वतो विधिप्रतिषेधशास्त्रगोचरत्वं नास्तीत्यर्थः। तत्र को हेतुरित्याशङ्क्य तत्त्वज्ञानाद्वर्णाश्रमाद्यभिमानशून्यत्वमिति दृष्टान्तान्तरमाह बृहस्पति-सव इति॥ ५७॥

दार्ष्टान्तिकमाह विदेह इति। विदेह इत्यनेन स्थूलशरीराभिमाना-भाव उक्तः। वीतसन्देहो विगतसन्देह एतेन संशयात्मकसूक्ष्मशरीरा-भावः सूच्यते। तत्र हेतुर्नेति नेतीति। देहाद्यनात्मदृग्देहेन्द्रियादावा-त्माभिमानहीन इत्यर्थः॥ ५८॥

एवं देहादौ मिथ्याभिमानवत एव प्रवृत्तिर्नाभिमानशून्यस्येत्युक्तम्। तत्र मिथ्याभिमानात्प्रवृत्तिं दृष्टान्तेन दर्शयति तस्यार्थस्येति। मृत्स्नेभके प्रशस्तमृन्निर्मिते कलभे॥ ५९॥

एवं तावत्सन्निपत्य न च ज्ञानमित्यादिना ज्ञानकर्मणोः समुच्चयो नि-राकृतस्तदेतदयुक्तं "यदेव विद्यया करोति" "ज्ञात्वा कर्माणि कुर्वीत"-

एवं यत्र यत्र ज्ञानकर्मणोः प्रयोज्यप्रयोजकभावस्तत्र तत्र सर्वत्रायं न्यायः । यत्र तु न समकालं नापि क्रमेणोपपद्यते समुच्चयः स विषय उच्यते ।

स्थाणोः सतत्त्वविज्ञानं यथा नाङ्गं पलायने ।
आत्मनस्तत्त्वविज्ञानं तद्वन्नाङ्गं क्रियाविधौ ॥ ६१ ॥

यस्माद्गुणस्यैतत्स्वाभाव्यम् ।

यद्धि यस्यानुरोधेन स्वभावमनुवर्त्तते ।
तत्तस्य गुणभूतं स्यान्न प्रधानाद्गुणो यतः ॥ ६२ ॥

---

त्यादिवचनविरोधादित्याशङ्क्याह न च वयमिति । यत्र ज्ञानकर्मणोः प्रयोज्यप्रयोजकभावो निमित्तनैमित्तिकभावस्तत्र न केनापि तयोः समुच्चयो वारयितुं शक्यत इत्यर्थः । कुत्र तर्हि ज्ञानकर्मणोः प्रयोज्यप्रयोजकभावः कुत्रासौ नास्तीत्यत आह तत्र विभागेति । यथा चोरधिया स्थाणुमालाय गृहीत्वा पलायत एवं बुद्ध्यादिरूपेणात्मानं गृहीत्वा कर्म करोतीति । तेन तत्र कर्मप्रवृत्तिनिमित्तत्वाज्ज्ञानं कर्माङ्गमित्यर्थः ॥ ६० ॥

"यदेव विद्यया करोति" "ज्ञात्वा कर्माणि कुर्वीते"त्यादावप्ययमेव न्याय इत्यतिदिशति एवं यत्रेति । आत्मज्ञानस्य तु कर्मप्रवृत्तौ प्रयोज्यप्रयोजकभावाभावान्न तेन समुच्चय इति सदृष्टान्तमाह यत्र तु न समकालमिति । स्थाणोः सतत्त्वविज्ञानमिति । स्थाणुविषयं तत्त्वज्ञानं स्थाणुरेवायं न चोर इति तत्त्वज्ञानं यथा नाङ्गमेवमात्मतत्त्वविज्ञानमकर्तृब्रह्माहमस्मीति ज्ञानं कर्मप्रवृत्तौ नाङ्गमित्यर्थः ॥ ६१ ॥

प्रधानत्वेनाभिमतकर्मनिवर्त्तकत्वादपि नात्मज्ञानं कर्माङ्गमित्याह यस्माद्गुणस्येति । गुणस्यैतत्स्वभावत्वमस्ति यत्प्रधानानुरोधित्वं तच्च तत्त्वज्ञानस्य नास्तीत्यर्थः । प्रधानमत्तीति प्रधानात् । यत्प्रधानविरोधि न तदङ्गमित्यर्थः ॥ ६२ ॥

यस्मात् ।

कर्म प्रकरणाकाङ्क्षि ज्ञानं कर्मगुणो भवेत् ।
यद्धि प्रकरणे यस्य तत्तदङ्गं प्रचक्षते ॥ ६३ ॥

स्वरूपलाभमात्रेण यत्त्वविद्यां निहन्ति नः ।
न तदङ्गं प्रधानं वा ज्ञानं स्यात्कर्मणः क्वचित् ॥ ६४॥

समुच्चयपक्षवादिनाप्यवश्यमेतदभ्युपगन्तव्यम् । यस्मात् ।

अज्ञानमनिराकुर्वन् ज्ञानमेव न सिध्यति ।
विपन्नकारकग्रामं ज्ञानं कर्म न ढौकते ॥ ६५ ॥

इदं चापरं कारणं ज्ञानकर्मणोः समुच्चयनिबर्हि ।

हेतुस्वरूपकार्याणि प्रकाशतमसोरिव ।
विरोधीनि ततो नास्ति साङ्गत्यं ज्ञानकर्मणोः ॥ ६६ ॥

---

विनियोजकप्रकरणादिसद्भावात्कर्मस्वरूपादिसम्यग्ज्ञानस्य तदङ्गत्वमुचितमात्मज्ञानस्य तु प्रकरणाद्यभावान्न तदङ्गत्वमित्यभिप्रेत्याह यस्मादिति । कर्म प्रकरणाकाङ्क्षीति ॥ ६३ ॥

एतदेव स्पष्टयति स्वरूपलाभेति ॥ ६४ ॥

आत्मज्ञानस्य कर्मणा समुच्चयमभ्युपगच्छता तस्य प्रमाणज्ञानत्वात्स्वविषयाविद्यानिवर्त्तकत्वं बलादभ्युपेयम् । तथा सति न स्वाभिमतसमुच्चयसिद्धिरित्याह समुच्चयपक्षवादिनापीति । नन्वज्ञानमनिराकुर्वज्ज्ञानमेव न सिध्यति ततः किमित्यत आह विपन्नेति । कारकग्रामाभावे कर्मण एवाभावान्न ज्ञानं कर्म स्पृशतीत्यर्थः ॥ ६५ ॥

इदमिति । हेतुस्वरूपकार्याणीति । ज्ञानस्य हेतुः प्रमाणम् । स्वरूपं च परमार्थप्रकाशात्मकत्वम् । कार्यमविद्यानिवृत्तिः । कर्मणो हेतुरविद्यारागादिः । स्वरूपमप्रकाशात्मकत्वम् । कार्यमुत्पत्त्याप्त्यादीति परस्परविरोधीनि ॥ ६६ ॥

एवमुपसंहृते केचित्स्वसम्प्रदायबलावष्टम्भादाहुर्यदेतद्वेदान्तवाक्यादहं ब्रह्मेति विज्ञानं समुत्पद्यते तन्नैव स्वोत्पत्तिमात्रेणाज्ञानं निरस्यति किंतर्ह्यहन्यहनि द्राघीयसा कालेनोपासीनस्य सतो भावनोपचयान्निःशेषमज्ञानमपगच्छति "देवो भूत्वा देवानप्येती"ति श्रुतेः। अपरे तु ब्रुवते वेदान्तवाक्यजनितमहं ब्रह्मेति विज्ञानं संसर्गात्मकत्वादात्मवस्तुयाथात्म्यावगाह्येव न भवति किंतर्ह्येतदेव गङ्गास्रोतोवत्सततमभ्यस्यतोऽन्यदेवावाक्यार्थात्मकं विज्ञानान्तरमुत्पद्यते तदेवाशेषाज्ञानतिमिरोत्सारीति "विज्ञाय प्रज्ञां कुर्वीत ब्राह्मण" इति श्रुतेरिति। अस्य पक्षद्वयस्य निवृत्तय इदमभिधीयते।

सकृत्प्रवृत्त्या मृद्नाति क्रियाकारकरूपभृत्।
अज्ञानमागमज्ञानं साङ्गत्यं नास्त्यतोऽनयोः॥ ६७॥

---

पूर्वं ज्ञानस्य स्वोत्पत्तिमात्रेणाज्ञाननिवर्त्तकत्वात्कर्मभिः समुच्चयोऽनुपपन्न इत्युक्तं तदयुक्तं वाक्यजन्यज्ञानोत्तरकालीनभावनोत्कर्षाद्भावनाजन्यसाक्षात्कारलक्षणज्ञानान्तरेणैवाज्ञानस्य निवृत्तेर्ज्ञानाभ्यासदशायां ज्ञानस्य कर्मणा समुच्चयोपपत्तेरित्येकदेशिनां मतमुत्थाप्य निराकरोति एवमुपसंहृत इत्यादिना। देवो भूत्वा भावनोपचयाद्देवभावं साक्षात्कृत्य पतिते देह उपास्यदेवताभावं प्राप्नोतीत्यर्थः। विज्ञायशब्देन संसृष्टरूपं ब्रह्मावगम्य प्रज्ञां साक्षात्कारलक्षणामसंसर्गात्मिकां कुर्वीत सन्तताभ्यासबलात्साधयेदिति यावत्। इति पूर्ववादिनोऽभिप्रेता व्याख्या। सकृत्प्रवृत्त्येति। भवदभिमताया भावनायाश्चित्तैकाग्र्यहेतुतयासम्भावनाविपरीतभावनात्मकविक्षेपलक्षणप्रतिबन्धनिरासेन ज्ञानोत्पत्तावेवोपक्षीणत्वादुत्पन्नमात्रमागमिकं ज्ञानं सकार्यमज्ञानं तदैव निवर्त्तयतीति न ज्ञानकर्मणोः समुच्चयावसर इति भावः। "विज्ञाय प्रज्ञां

एवं तावदनानात्वे ब्रह्मणि ज्ञानकर्मणोः समुच्चयो निराकृतः । अथाधुना पक्षान्तराभ्युपगमेनापि प्रत्यवस्थाने पूर्ववदनाश्वासो यथा तथाभिधीयते ।

अनुत्सारितनानात्वं ब्रह्म यस्यापि वादिनः ।
तन्मतेनापि दुःसाध्यो ज्ञानकर्मसमुच्चयः ॥ ६८ ॥

तस्य विभागोक्तिर्दूषणविभागप्रज्ञप्तये ।

ब्रह्मात्मा वा भवेत्तस्य यदि वानात्मरूपकम् ।
आत्मानाप्तिर्भवेन्मोहादितरस्याप्यनात्मनः ॥ ६९ ॥

---

कुर्वीत" वेदान्तवाक्यप्रतिपाद्यं ब्रह्मेति विज्ञाय प्रज्ञामपरोक्षब्रह्मविज्ञानमसम्भावनाविपरीतभावनानिराकरणमुखेन वाक्यादेव कुर्यात् । तत्र विध्यसम्भवात्तत्साधनं मननादिकमसम्भावनाविपरीतभावनानिरासकारणं कुर्यादित्यर्थः ॥ ६७ ॥

नानारसत्वशून्यमद्वयं ब्रह्मेत्यभ्युपगम्य तज्ज्ञानस्य कर्मणा समुच्चयो निराकृतः संप्रति द्वैताद्वैतं ब्रह्मेत्यभ्युपगमेऽपि न समुच्चय इत्याह एवं तावदिति । अनुत्सारितेति । सामान्यविशेषात्मना भिन्नाभिन्नं ब्रह्मेति यस्य मतं तन्मतेऽपि दुःसंपादः समुच्चय इत्यर्थः ॥ ६८ ॥

भेदाभेदपक्षे जीवपरमात्मनोः संसारदशायामप्यभेदं केचिदिच्छन्ति । केचित्तु संसारदशायां भेद एव मुक्तिदशायामेवाभेद इति मन्यन्ते । तेन मतद्वयसम्भवाद्विकल्प्यत इत्याह तस्य विभागोक्तिरिति । विभागोक्तिर्विकल्पोक्तिः क्रियत इति शेषः । तत्राद्यं दूषयति आत्मानाप्तिरिति । ब्रह्मणः प्रत्यगात्मरूपत्वाङ्गीकारे ब्रह्मानाप्तिर्मोहमात्रादेव भवेत् । आत्मत्वादेव नित्यप्राप्तत्वान्मोहनिवर्त्तकं च ज्ञानमेवेति कर्मणो वैयर्थ्यमित्यर्थः । द्वितीयं दूषयति इतरस्येति । इतरस्य स्वत एव व्यतिरिक्तस्य ब्रह्मणोऽनात्मत्वादनाप्तिरेव न तु कदाचिदप्याप्तिः स्यात्तत्र किं कर्मणा ज्ञानेन वेत्यर्थः ॥ ६९ ॥

तत्र यदि तावद्वास्तवेनैव वृत्तेन ब्रह्म प्राप्तमात्मस्वाभाव्यात्केवलमासुरमोहपिधानमात्रमेवानाप्तिनिमित्तं तस्मिन्पक्षे ।

मोहापिधानभङ्गाय नैव कर्माणि कारणम् ।
ज्ञानेनैव फलावाप्तेस्तत्र कर्म निरर्थकम् ॥ ७० ॥

अनात्मरूपके तु ब्रह्मणि न कर्म साधनभावं प्रतिपद्यते नापि ज्ञानं कर्मसमुच्चितमसमुच्चितं वा यस्मादन्यस्य स्वत एव साधकस्य ब्रह्मणोऽप्यन्यत्वं स्वत एव सिद्धम् । तत्रैवम् ।

अन्यस्यान्यात्मताप्राप्तौ न क्वचिद्धेतुसम्भवः ।
तस्मिन् सत्यपि ना नष्टः परात्मानं प्रपद्यते ॥ ७१ ॥

---

प्रथमविकल्पे दूषणमेव स्पष्टयति तत्र यदीति । असुरसम्बन्धी मोह आसुरः । मोहापिधानेति । ब्रह्मप्राप्त्यन्तरायभूतमोहनिवर्त्तकं ब्रह्मज्ञानमेव न कर्म तत्र कर्मोपादानं निरर्थकमित्यर्थः ॥ ७० ॥

द्वितीयविकल्पे दूषणं स्पष्टयति अनात्मरूपके त्विति । कुतः समुच्चितमसमुच्चितं वा न साधनभावं प्रतिपद्यत इत्यत आह यस्मादन्यस्येति । ब्रह्मप्राप्तिसाधकस्य स्वत एव ब्रह्मणः सकाशादन्यस्य ब्रह्मणः प्राप्त्ययोगात्तत्प्राप्तये साधनोपादानायोगादित्यर्थः । यस्मादन्यत्वमिति पाठे सुकरैव योजना । साधकस्यान्यत्वेऽपि ब्रह्मणस्तदनन्यत्वात्तत्प्राप्तिसम्भवात्साधनोपादानमित्यत आह ब्रह्मणोऽपीति स्वतोऽन्यत्वेऽप्यनन्यत्वसिद्धये साधनोपादानमित्यत आह तत्रैवमिति । ननु कथं हेत्वसम्भवो ज्ञानं कर्म च हेतुरस्तीत्यत आह तस्मिन्सत्यपीति । अन्यस्मिन् स्थिते स्वभावविरोधादेव नान्यात्मताप्राप्तिर्नष्टेऽपि तस्याभावादेव नान्यस्यान्यात्मताप्राप्तिरित्यर्थः ॥ ७१ ॥

अपरस्मिंस्तु पक्षे विधिः ।

परमात्मानुकूलेन ज्ञानाभ्यासेन दुःखिनः ।
द्वैतिनोऽपि विमुच्येरन्न परात्मविरोधिना ॥ ७२ ॥

इतरस्मिंस्तु पक्षे विधेरेवानवकाशत्वम् । कथम् ।

समस्तव्यस्तभूतस्य ब्रह्मण्येवावतिष्ठतः ।
ब्रूत कर्मणि को हेतुः सर्वानन्यत्वदर्शिनः ॥ ७३ ॥

---

अस्तु तर्ह्यात्मानात्मद्वयरूपं ब्रह्म संसारदशायामपीत्याशङ्क्याह अपरस्मिंस्त्विवति । तस्मिन्नपि पक्षे "देवो भूत्वा देवानप्येती"ति न्यायेनाहं ब्रह्मास्मीत्युपासनयैव तत्प्राप्तेस्तद्विधिरेव कथंचिदभ्युपगन्तव्यो न कर्मविधिस्तस्य केवलभेदाश्रयत्वेन स्वाभ्युपगतब्रह्मस्वरूपविरोधित्वादित्यर्थः । यद्वा । परस्य वादिनो योऽभिमत आत्मा द्वैताद्वैतरूपस्तद्विरोधिना केवलाद्वैतज्ञानेन न मुच्येरन् किंत्वहं ब्रह्मास्मीत्युपासनयैवेत्यर्थः । अस्तु तर्हि प्रस्तुतदोषपरिहाराय केवलाभेद एवानेकरसेन ब्रह्मणेत्याशङ्क्य तत्पक्षे ज्ञानविधिः कर्मविधिश्च न सम्भवतीत्याह इतरस्मिंस्त्विवति । कर्मणि को हेतुरिति । उपासनाख्ये मानसे बाह्ये च कर्मणि को हेतुर्न कश्चिन्निरस्ताशेषाधिकारब्रह्मभूतत्वादस्येत्यर्थः । केचित्त्वपरस्मिंस्तु पक्षे विधिरित्यनात्मभूतमेव ब्रह्मेत्यस्मिन्पक्षे ज्ञानविषयो विधिः सम्भवति विधितः प्रवृत्तिरपि सम्भाव्यते प्रमाणवस्तुपरतन्त्रतत्त्वज्ञानादन्यस्योपासनाज्ञानस्याक्रियारूपत्वाभावादिति भेदपक्ष एव वर्ण्यत इति व्याचक्षते । नन्वस्तु विधिर्विधिप्रयुक्ता वा विधेयार्थविषया प्रवृत्तिरपि भवतु किं ततो भवतीत्यपेक्षायामिदं भवतीत्याह परमात्मानुकूलेनेति । उपासनाफलरूपा या मुक्तिः सा तेषां स्यान्न तु वाक्यार्थरूपतत्त्वज्ञानफलभूता मुक्तिः सम्भवतीत्यर्थः । इदानीमक्षरयोजना क्रियते । जीवे ब्रह्मदृष्टिप्रक्षेपेण यदुपासनं तदिह परमात्मानुकूलं ज्ञानं तेन ज्ञानाभ्यासेन गङ्गास्रोतोवत्सततमहं ब्रह्मास्म्यहं ब्रह्मास्मीति विजातीयप्रत्ययानन्तरितसजातीयप्रत्ययप्रवाहीकरणेन दुःखिनो द्वैतिनोऽपि प्रमुच्येरन्न परमात्मविरो-

सर्वकर्मनिमित्तसम्भवासम्भवाभ्यां सर्वकर्मसङ्करश्च प्राप्नोति । यस्मात् ।

सर्वजात्यादिमत्त्वेऽस्य नितरां हेत्वसम्भवः ।
विशेषं ह्यनुपादाय कर्म नैव प्रवर्त्तते ॥ ७४ ॥

स्याद्विधिरध्यात्माभिमानादिति चेन्नैवम् । यस्मात् ।

---

धिना । जीवपरमात्मनोर्भेदसंसर्गपरित्यागपूर्वकमहमस्मि परं ब्रह्मेति वाक्यार्थविज्ञानेन मुच्येरन्निति सम्बन्धः । जीवाद्भिन्नः परमात्मा । इदं च ज्ञानमभेदप्रतिबन्धकत्वेन वस्तुविपरीतग्राहकत्वात्परमात्मविरोधीत्युच्यत इति द्रष्टव्यम् । इतरस्मिंस्तु पक्षे विधेरेवानवकाशत्वमिति प्रत्यग्भूतमेव जीवात्मनः परमात्मतत्त्वमित्यस्मिन्पक्ष इत्यभेदपक्ष एवोच्यत इति व्याचक्षते तत्तथैवाभ्युपगम्यते । अपरस्मिंस्त्विति । भेदपक्ष एवं वर्ण्यत इत्येतन्न मृष्यामहे । कस्मात् । तस्यानात्मरूपके तु ब्रह्मणीत्यादिनानन्तरमेव निरस्तस्य पुनरनुवृत्तौ तुशब्देन व्यावर्त्तनायोगात्पूर्वोक्तमेव ग्राह्यमिति ॥ ७२ ॥ ७३ ॥

केवलाभेद एवानेकरसे ब्रह्मणीत्यस्मिन्पक्षे दोषान्तरमाह सर्वकर्मनिमित्तेति । यस्य खलु जीवाः परस्मादात्मनो भिद्यन्ते तस्य पक्षे ब्राह्मणो बृहस्पतिसवेन राजा राजसूयेन वैश्यो वैश्यस्तोमेन यजेतेत्यादिशास्त्रव्यवस्थोपपद्यते । यस्य तु पक्षे जीवाः परमात्मनो न भिद्यन्तेऽभिन्ना एव तस्य तु पक्षे जीवानां सर्वात्मकब्रह्मणैकत्वेन सर्वात्मकत्वाद्ब्राह्मणस्य क्षत्रियादिकत्वं ब्राह्मणत्वं च भवति । एवं क्षत्रियादेरपि ब्राह्मणत्वं क्षत्रियादिकत्वं च भवति । ततश्च सर्वेषां सर्वजातिसमवायात्सर्वकर्मसङ्करः प्रसज्येतेत्यर्थः । सर्वजात्यादिमत्त्व इति । अस्य विदुषो जीवस्य सर्वजात्यादिमत्त्वे प्रतिनियतकर्मसु प्रवृत्तिहेतुर्न सम्भवति ब्राह्मणत्वादिविशेषमुपादाय हि प्रतिनियतकर्मसु प्रवर्त्तते विशेषश्च सर्वात्मकब्रह्माभिन्नत्वेन सर्वजातिमत्त्वान्नास्तीत्यर्थः ॥ ७४ ॥

ननु यद्यपि जीवस्य ब्रह्मणा सर्वात्मकेनाभेदोऽस्ति तथापि ब्राह्म-

न चाध्यात्माभिमानोऽपि विदुषोऽस्त्यासुरत्वतः ।
विदुषोऽप्यासुरश्चेत्स्यान्निष्फलं ब्रह्मदर्शनम् ॥ ७५ ॥

अज्ञानकार्यत्वाच्च न समकालं नापि क्रमेण ज्ञानकर्मणोर्वस्त्ववस्तुतन्त्रत्वात्सङ्गतिरस्तीत्येवं निराकृतोऽपि काशं कुशं वावलम्ब्याह ।

अथाध्यात्मं पुनर्यायादाश्रितो मूढतां भवेत् ।
स करोत्येव कर्माणि को ह्यज्ञं विनिवारयेत् ॥ ७६ ॥

---

णोऽहं क्षत्रियोऽहमिति जात्यादिसमवायिस्थूलदेहाभिमाननिमित्तो भेदोऽपि सम्भवति ततश्चाधिकारिव्यवस्थया कर्मव्यवस्था घटत इति शङ्कते स्याद्विधिरिति । परिहरति नैवं यस्मादिति । विदुषस्तत्त्वविदोऽध्यात्माभिमानः शरीराद्यभिमानो नास्ति तस्यासुरमोहनिमित्तत्वेन तत्त्वज्ञानादेव निवृत्तेर्देहाद्यभिमाननिवृत्तौ चाधिकारव्यवस्था दूरापास्ता स्यादित्यर्थः । तर्हि देहाद्यभिमानसिद्ध्यै ज्ञानिनोऽपि मोहोऽभ्युपगम्यत इत्यत आह विदुषोऽपीति । ब्रह्मज्ञानस्याज्ञानानिवर्त्तकत्वे तस्य निष्फलत्वं प्रसज्येत ततश्च विदुषो नास्त्येव मोह इत्यभ्युपगन्तव्यमित्यर्थः ॥ ७५ ॥

वृत्तानुद्रवणपूर्वकमुत्तरश्लोकस्य सङ्गतिमाह अज्ञानकार्यत्वादिति । अज्ञानकार्यत्वेऽपि वस्तुपरतन्त्रस्य ज्ञानस्यावस्तुपरतन्त्रस्य च कर्मणः समकालं क्रमेण वा सङ्गतिर्न सम्भवतीत्येवमधस्तनश्लोकेन निराकृतमपि विदुषोऽनुभवसिद्धस्य देहाद्यभिमानस्य युक्त्या निराकरणमयुक्तमित्येतदालाम्ब्य पुनः प्रत्यवतिष्ठत इत्यर्थः । अथाध्यात्ममिति । अवगतपरमार्थतत्त्वोऽपि पुनः कार्यकारणसङ्घातेऽहमभिमानवान्भवतीत्यर्थः । परिहरति आश्रित इति । एवं चेन्नासौ विदितपरमार्थतत्त्वः किंत्वज्ञ एव विपरीतदर्शनवत्त्वात् । न वयमज्ञस्य कर्मसम्बन्धं वारयामः किंतु ज्ञानिन एव । त्वयापि न ज्ञानिनः सम्बन्धः प्रतिपादितस्ततश्च नास्माकं क्षतिरित्यर्थः ॥ ७६ ॥

सिद्धत्वाच्च न साध्यम् । यतः ।

सामान्येतररूपाभ्यां कर्मात्मैवास्य योगिनः ।
निःश्वासोच्छ्वासवत्तस्मान्न नियोगमपेक्षते ॥ ७७ ॥

अस्तु तर्हि भिन्नाभिन्नात्मकं ब्रह्म तथाच सति ज्ञानकर्मणी सम्भवतो भेदाभेदविषयत्वात्तयोः । तत्र तावदयं पक्ष एव न सम्भवति । किं कारणम् । नहि भिन्नोऽयमित्यभेदबुद्धिमनिराकृत्य भेदबुद्धिः पदार्थमालिङ्गते । एवं ह्यनभ्युपगमे भिन्नाभिन्नपदार्थयोरलौकिकत्वं प्रसज्येत । अथ निष्प्रमाणकमप्याश्रीयते । तदप्युभयपक्षाभ्युपगमादभेदपक्षे दुःखि ब्रह्म स्यादत आह ।

---

विदुषः कर्मासम्भवे हेत्वन्तरमाह सिद्धत्वाच्चेति । विदुषः स्वरूपतया नित्यसिद्धत्वाच्च कर्मणो न नियोगसाध्यत्वमित्यर्थः । कथं स्वरूपतया सिद्धिरित्यत आह यतः सामान्येति । सर्वं वस्तु सामान्यविशेषयोरन्तर्भूतं ततश्च कर्मणोऽपि सामान्यान्तःपातित्वं विशेषान्तःपातित्वं वा स्यात् । सामान्यविशेषयोश्च ब्रह्मस्वरूपत्वात्तदात्मकत्वाच्च विदुषः कर्मापि तस्य स्वरूपमेव ततश्चासाध्यत्वादेव न नियोगविषयत्वम् । तदनुष्ठानं दूरत एव समुच्चयस्तु ततोऽपि दूरतर एव तस्मादनैकान्तिकपक्षे दुरुपपादः समुच्चय इत्यर्थः ॥ ७७ ॥

एवमभेदपक्षे निराकृते पुनर्भेदाभेदपक्षमुत्थापयति तस्य स्वरूपेणैवासम्भवं दर्शयितुं अस्तु तर्हीति । उक्तेऽर्थे कर्मज्ञानकाण्डयोः प्रामाण्यानुपपत्तिः प्रमाणमित्याह तथा च सतीति । अभेदं विना ब्रह्माहमस्मीति ज्ञानानुपपत्तेर्भेदं विना चानेककारकसाध्यकर्मानुपपत्तेश्च भिन्नाभिन्नात्मकं ब्रह्मेत्यर्थः । तिष्ठतु तावद्ब्रह्मणो भिन्नाभिन्नत्वं लोकेऽप्ययं पक्षो न सम्भवतीत्याह तत्र तावदिति । ननु सन् घटः शुक्लः पटो मृच्छरावो दण्डी देवदत्त इत्यादौ सामान्यविशेषद्रव्यगुणादीनां सामानाधि-

भिन्नाभिन्नं विशेषैश्चेद्दुःखि स्याद्ब्रह्म ते ध्रुवम् ।
अशेषदुःखिता च स्यादहो प्रज्ञात्मवादिनाम् ॥ ७८ ॥

तस्मात्सम्यगेवाभिहितं न ज्ञानकर्मणोः समुच्चय इत्युपसंह्रियते ।

तमोऽङ्गत्वं यथा भानोरग्नेः शीताङ्गता यथा ।
वारिणश्चोष्णता यद्वज्ज्ञानस्यैवं क्रियाङ्गता ॥ ७९ ॥

---

करण्यमत्यन्तमभेदे भेदे च घटोऽश्वो महिष इत्यादावदर्शनादनुपपद्यमानं भिन्नाभिन्नत्वं कल्पयतीति शङ्कते किं कारणमिति । तर्हि वक्तव्यमभेद इत्यत्र किं भेदाभावः किंवा भेदविरोधी किंवा भेदादन्योऽभिधीयत इति । न तावदाद्यौ तथा सति भेदाभेदयोरेकत्र युगपत्समावेशानुपपत्तेः । नापि तृतीयः रूपरसादीनामपि भेदादन्यत्वेनाभेदत्वप्रसङ्गात् । एवंविधभेदाभेदयोरभ्युपगमे चालौकिकत्वप्रसङ्गात्सामानाधिकरण्यप्रत्ययस्य कल्पितभेदेनापि सोऽयं देवदत्तः खं छिद्रमित्यादाविव सम्भवादित्यभिप्रेत्योपसंहरति न हि भिन्नोऽयमिति । भेदबुद्धिरभेदबुद्धिमनिराकृत्य न हि पदार्थमालिङ्गत इत्यर्थः । अस्तु यथा तथा लोके ब्रह्मणि पुनर्भिन्नाभिन्नत्वं सर्वथैवानुपपन्नमित्याह अथ निष्प्रमाणकमपीत्यादिना । भिन्नाभिन्नत्वं विशेषैश्चेदित्यत्र सामान्येन चेति पदद्वयमध्याहर्तव्यम् । न केवलं दुःखित्वमात्रं किंतु सर्वजीवाभेदात्तद्गतमखिलमपि दुःखित्वं ब्रह्मगतमेवेति तत्प्राप्तिरनर्थायैव स्यादिति सोपहासमाह अशेषेति । स्वाश्रितदुःखानुभव एव जीवानां ब्रह्मणस्त्वशेषजीवाश्रितदुःखानुभवप्रसङ्गान्महत्तरः संसारः स्यात्ततश्च संसारिभ्योऽपि हीनं ब्रह्म भवेत् । अहो माहात्म्यं प्रज्ञायाः । नमोऽस्तु ब्रह्मवादिभ्यः क्षपणकशिष्येभ्य इत्यर्थः ॥ ७८ ॥

तमोऽङ्गत्वमिति । ज्ञानस्य कर्माङ्गत्वाभावे कर्मणश्च ज्ञानाङ्गत्वाभावे समसमुच्चयाभावे च दृष्टान्तत्रयमिति द्रष्टव्यम् । क्रियाङ्गतेत्यत्र क्रियां प्रत्यङ्गता क्रियाङ्गमस्येत्युभयथा द्रष्टव्यम् ॥ ७९ ॥

यथोक्तोपपत्तिबलेनैव पूर्वपक्षस्योत्सारितत्वाद्वक्तव्यं नावशेषितमित्यतः प्रतिपत्तिकर्मवत्पूर्वपक्षपरिहाराय यत्किञ्चिद्वक्तव्यमित्यत इदमभिधीयते ।

"मुक्तेः क्रियाभिः सिद्धत्वादि"त्याद्यनुचितं बहु ।
यदभाणि तदन्याय्यं यथा तदधुनोच्यते ॥ ८० ॥

योऽयं काम्यानां प्रतिषिद्धानां च त्यागः प्रतिज्ञायते सा प्रतिज्ञा तावन्न शक्यतेऽनुष्ठातुम् । किं कारणम् । कर्मणो हि निर्वृत्तात्मनो द्वाभ्यां प्रकाराभ्यां निवृत्तिः सम्भवत्यारब्धफलस्योपभोगेनानारब्धफलस्याशुभस्य प्रायश्चित्तैरिति । तृतीयोऽपि त्यागप्रकारोऽकर्त्रात्मावबोधात्स त्वात्मज्ञानानभ्युपगमाद्भवता नाभ्युपगम्यते । तत्र यान्यनुपभुक्तफलान्यनारब्धफलानि तानीश्वरेणापि केनचिदपि

---

केवलकर्मणां ज्ञानसमुच्चितानां वा मोक्षसाधनत्वस्य निराकरणाज्ज्ञानस्यैव मोक्षसाधनत्वं सिद्धं तत्र किमुत्तरग्रन्थसन्दर्भेणेत्याशङ्क्य प्रमेयस्योपपादितत्वेऽपि तदुक्तीनामनिराकरणे तत्पक्षो न निराकृत इति मन्दमतीनां शङ्का स्यात्तन्निवृत्तये तत्तदुक्तीनां क्रमेण खण्डनायोत्तरग्रन्थ इत्याह यथोक्तेति । अतः प्रतिपत्तिकर्मवदिति । उपयुक्तस्य द्रव्यस्यैव स्वयमेव परित्यागे प्राप्ते "चात्वाले कृष्णविषाणामुत्सृजेदि"ति नियमवन्निराकृतेऽपि पूर्वपक्षे तदुक्तिनिरासायायं प्रयत्न इत्यर्थः ॥ ८० ॥

तत्राकुर्वतः क्रियाः काम्या निषिद्धास्त्यजतस्तथेति यदुक्तं तत्तावन्निरस्यति योऽयमिति । तत्र किमनुष्ठितानां परित्यागः किं वा तदनुष्ठानस्येति विकल्प्य नाद्य इत्याह कर्मणो हीति । निर्वृत्तात्मनो निष्पन्नस्वरूपस्य । ननु "क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावर" इति ज्ञानादपि सर्वकर्मनिर्वृत्तिः श्रूयते तत्र कथं द्वाभ्यां प्रकाराभ्यामित्युच्यत इत्यत आह तृतीयोऽपीति । भवता तादृशज्ञानानङ्गीकारात्तेन निवृत्तिर्नाभ्युप-

न शक्यन्ते परित्यक्तुम् । अथारब्धफलानि त्यज्यन्ते तान्यपि न शक्यन्ते त्यक्तुम् । किं कारणम् । अनिवृत्तेः । अनिर्वृत्तं हि चिकीर्षितं कर्म शक्यते त्यक्तुं प्रवृत्तिनिवृत्ती प्रति कर्त्तुः स्वातन्त्र्यात् । निवृत्ते तु कर्मणि तदसम्भवाद्धुरनुष्ठेयः प्रतिज्ञातार्थः । अशक्यप्रतिज्ञानाच्च । न च शक्यते प्रतिज्ञातुं यावज्जीवं काम्यानि प्रतिषिद्धानि च कर्माणि न करिष्यामीति सुनिपुणानामपि सूक्ष्मापराधदर्शनात् । प्रमाणाभावाच्च । न च प्रमाणमस्ति मोक्षकामो नित्यनैमित्तिके कर्मणी कुर्यात्काम्यप्रतिषिद्धे च वर्जयेदारब्धफले चोपभोगेन क्षपयेदिति । आनन्त्याच्च । न चोपचितानां कर्मणामियत्तास्ति संसारस्यानादित्वात् । न च काम्यैः प्रतिषिद्धैर्वा तेषां निवृत्तिरस्ति शुद्ध्यशुद्धिसाम्ये सत्यविरोधादित्यत आह ।

न कृत्स्नकाम्यसन्त्यागोऽनन्तत्वात्कर्त्तुमिष्यते ।
निषिद्धकर्मणश्चेत्तु व्यतीतानन्तजन्मसु ॥ ८१ ॥

---

गम्यत इति प्रकारद्वैविध्यं दर्शितमित्यर्थः । अस्तु द्वाभ्यां प्रकाराभ्यां निवृत्तिस्ततः किमित्यत आह तत्र यानीति । तान्येव विशिनष्टि अनारब्धेति । अनारब्धानां कर्मणामनुपस्थितत्वादेव निवर्त्तनायोगादित्यर्थः । तर्ह्यारब्धफलानि त्यज्यतामित्याशङ्क्य परिहरति अथेत्यादिना । अनिवृत्तेरित्युपभोगप्रायश्चित्ताभ्यां विना निष्पन्नस्यानिवृत्तेरित्यर्थः । एतदेव व्यतिरेकमुखेनोपपादयति अनिर्वृत्तं हीति । तदसम्भवात्स्वातन्त्र्यासम्भवात् । अथानुष्ठानस्यैव परित्याग इति द्वितीयं पक्षं प्रत्याह अशक्यप्रतिज्ञानाच्चेति । किमिति न शक्यत इत्यत आह सुनिपुणानामिति । पुनरप्यनुष्ठितानां परित्यागपक्षं दूषयति आनन्त्याच्चेति । तदेव प्रपञ्चयति न चेति । न "न्वस्त्रमस्त्रेण शाम्यती" ति न्यायेन काम्यैः काम्यानां निषिद्धै-

स्यान्मतं व्यतीतानन्तजन्मोपात्तानां कर्मणाम् ।
क्षयो नित्येन तेषां चेत्प्रायश्चित्तैर्यथैनसः ।
निष्फलत्वान्न नित्येन काम्यादेर्विनिवारणम् ॥ ८२ ॥
प्रमाणाभावाच्च कथम् ।
पापापनुत्तये वाक्यात्प्रायश्चित्तं यथा तथा ।
गम्यते काम्यहानार्थं नित्यं कर्म न वाक्यतः ॥ ८३ ॥
अथापि स्यात्काम्यैरेव काम्यानां पूर्वजन्मोपचितानां क्षयो भविष्यतीति । तन्न । यतः ।

---

निषिद्धानां निवृत्तिरस्त्वित्यत आह न च काम्यैरिति । उपपादितेऽर्थे श्लोकमवतारयति आहेति । यद्यपि काम्यशब्देन सह समस्तत्वात्कृत्स्नसंत्यागशब्दयोः पदान्तरेण सह संबद्धुमयोग्यत्वं तथापि निषिद्धकर्मण इत्यनेन कृत्स्नसंत्यागशब्दौ सम्भवात्सम्बध्येते । व्यतीतानन्तजन्मसु कृतस्यानुष्ठितस्य निषिद्धकर्मणश्च कृत्स्नस्यापि संत्यागो नेष्यतेऽनन्तत्वादेवेत्यर्थः ॥ ८१ ॥

अस्तु तर्हि तेषां नित्यकर्मणा निवृत्तिरिति शङ्कते स्यान्मतमिति । यथैव प्रतिषिद्धस्य कर्मणः प्रायश्चित्तैः क्षयो भवत्येवं व्यतीतानन्तजन्मोपार्जितानां काम्यानां प्रतिषिद्धानां च कर्मणां नित्यकर्मभिः प्रक्षयो भविष्यतीत्यर्थः । परिहरति निष्फलत्वादिति । नित्यानां कर्मणां निष्फलत्वात्काम्यप्रतिषिद्धलक्षणकर्मक्षयः फलं न भवति तेषामित्यर्थः ॥ ८२ ॥

उपात्तदुरितक्षयार्थानि नित्यानीति भट्टादिभिरभ्युपगमान्नित्यानां निष्फलत्वमसिद्धमित्याशङ्क्य तथापि काम्यकर्मनिवृत्तिस्ततो भवतीत्यत्र प्रमाणं न पश्याम इत्याह प्रमाणाभावाच्चेति । पापापनुत्तय इति । यथा प्रायश्चित्तं पापक्षयनिमित्तमित्यत्र शास्त्रं प्रमाणं नैवं काम्यकर्मक्षयफलत्वे नित्यानां कर्मणां शास्त्रं किंचित्प्रमाणमस्तीत्यर्थः ॥ ८३ ॥

अस्तु तर्हि काम्यैरेव काम्यानां निवृत्तिरित्याशङ्क्य श्लोकेन परिहरति

पाप्मनां पाप्मभिर्नास्ति यथैवेह निराक्रिया ।
काम्यैरपि तथैवास्तु काम्यानामविरोधतः ॥ ८४ ॥

एवं ताव"न्मुक्तेः क्रियाभिः सिद्धत्वादि"ति निराकृतम् । अथात्मज्ञानस्य सद्भावे प्रमाणासम्भव उक्तस्तत्परिहारायाह ।

श्रुतयः स्मृतिभिः साकमानन्त्यात्कामिनामिह ।
विदधत्युरुयत्नेन कर्मातो बहुकामदम् ॥ ८५ ॥

न च बाहुल्यं प्रामाण्ये कारणभावं प्रतिपद्यते । अत आह ।

प्रामाण्याय न बाहुल्यं न ह्येकत्र प्रमाणताम् ।
वस्तुन्यटन्ति मानानि त्वेकत्रैकस्य मानता ॥ ८६ ॥

---

अथापि स्यादित्यादिना ॥ ८४ ॥

यदुक्तं "यावन्त्यश्चेह विद्यन्त" इति तत्परिहारायोत्तरश्लोक इति वृत्तं कीर्त्तयन्नाह एवं तावदिति । श्रुतय इति । काम्यमानविविधफलसाधनत्वमेव तत्र कर्मणां दर्शितम् । न पुनरात्मज्ञानाभावस्तस्य मोक्षसाधनत्वाभावो वा तत्र तत्र प्रदर्श्यते तस्माद्यथावस्थितवस्तुविषयज्ञानप्रतिपादकप्रमाणाभावो नास्तीत्यर्थः ॥ ८५ ॥

ननु कर्मप्रतिपादकवेदवाक्यानां बहुलत्वादात्मप्रतिपादकानां चाल्पत्वात्कर्मण्येव तात्पर्यमित्यत आह न च बाहुल्यमिति । प्रमाणानां स्वतःप्रमाणत्वेन स्वविषयसाधने प्रमाणान्तरानपेक्षत्वात्संवादात्प्रामाण्यमित्यनङ्गीकारात्कर्मकाण्डेऽप्येकैकस्मिन्कर्मण्येकैकस्य वाक्यस्य प्रमाणत्वात्कर्मणां बहुलत्वेन तत्र वाक्यबाहुल्यसम्भवादात्मनः पुनरेकरूपत्वात्तत्प्रतिपादकवाक्यबाहुल्यानपेक्षणाच्छाखाभेदेन वाक्यबाहुल्यस्योभयत्राप्यविशेषान्न बाहुल्यं प्रामाण्यायापेक्षणीयमिति भावः ॥ ८६ ॥

यत्तूक्तं "यत्नतो वीक्षमाणोऽपीति" तत्रापि भवत एवापराधः । कस्मात् । यतः ।

"परीक्ष्य लोकानि"त्याद्या आत्मज्ञानविधायिनीः ।
नैष्कर्म्यप्रवणाः साध्वीः श्रुतीः किं न शृणोषि ताः ॥

न"न्वात्मेत्येवोपासीत" "आत्मा वा अरे द्रष्टव्य"इत्यपूर्वविधिश्रुतेः पुरुषस्यात्मदर्शनक्रियायां नियोगोऽवसीयत इति । नैवम् । अपुरुषतन्त्रत्वाद्वस्तुयाथात्म्यज्ञानस्य सकलानर्थबीजात्मानवबोधोत्सारिणो मुक्तिहेतोरिति । विध्युपगमेऽपि नापूर्वविधिरयम् । अत आहुः ।

नियमः परिसंख्या वा विध्यर्थोऽपि भवेद्यतः ।
अनात्मादर्शनेनैव परात्मानमुपास्महे ॥ ८८ ॥

---

यत्पुनरुक्तं वेदान्तेषु विध्यसम्भवात्प्रामाण्यं न सम्भवतीति तदुत्थाप्य निरस्यति यत्तूक्तमित्यादिना । आत्मज्ञानविधायिनीरिति । आत्मज्ञानायाचार्योपगमनादिविधायिनीरित्यर्थः । नैष्कर्म्यप्रवणा इति फलवत्त्वमुक्तम् । साध्वीरित्युपक्रमाद्यभिमततात्पर्यवत्त्वम् ॥ ८७ ॥

आत्मज्ञानविधायिनीरिति यथाश्रुतमेव गृहीत्वा नियोगपरत्वं वेदान्तानां प्राप्तमिति शङ्कते नन्वात्मेत्यादिना । ज्ञानस्य प्रमाणवस्तुपरतन्त्रत्वेनेच्छया कर्त्तुमकर्त्तुमन्यथाकर्त्तुमशक्यत्वादन्वयव्यतिरेकसिद्धफलत्वेन च विध्यनपेक्षणान्नास्य विधेयत्वं किन्तु श्रवणादेरेवेत्यभिप्रेत्य परिहरति नैवमिति। ननु "श्रोतव्यो मन्तव्य" इति श्रवणादिविधिव्यतिरेकेण "द्रष्टव्य" इति दर्शनेऽपि विधिः श्रूयत इत्याशङ्क्य मैवं दर्शनस्याविधेयत्वप्रतिपादनात्प्राप्तत्वाच्च तत्रापूर्वविध्यसम्भवादिति परिहरति विध्यभ्युपगमेऽपीति । विध्यर्थो विधिप्रत्ययस्य लिङादेरर्थः । तत्रानेकत्र पाक्षिकतया प्राप्तौ नियमः । अप्राप्तौ विधिः । तुल्यवत्प्राप्तौ परिसंख्या । "विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति । तत्र चान्यत्र च

यच्चोक्तं "विश्वासो नान्यतोऽस्ति न" इति तदपि निद्रातुरचेतसा त्वया स्वप्नायमानेन प्रलपितम् । किं कारणम् । नहि वयं प्रमाणबलेनैकात्म्यं प्रतिपद्यामह ऐकात्म्यस्य स्वत एवानुभवमात्रात्मकत्वात् । अत एव सर्वप्रमाणावतारासम्भवं वक्ष्यति प्रमाणव्यवस्थायाश्चानुभवमात्राश्रयत्वात् । अत आह ।

वाक्यैकगम्यं यद्वस्तु नान्यस्मात्तत्र विश्वसेत् ।
नाप्रमेये स्वतःसिद्धेऽविश्वासः कथमात्मनि ॥ ८९ ॥

---

प्राप्तौ परिसंख्येति गीयत" इति वचनात् । अत्र चानात्मदर्शनस्य प्राबल्यादात्मदर्शनस्याप्राबल्यात्पाक्षिकत्वे नियमविधिरात्मा द्रष्टव्य इति । यदा चात्मानात्मदर्शने तुल्यवत्प्राप्तेऽहमित्यात्मस्फुरणाव्यतिरेकेणानात्मनोऽपि स्फुरणात्तत्र परिसंख्येति । उभयथापि नापूर्वविधिरप्राप्त्यभावादित्यर्थः । नियमपरिसंख्ययोः सम्भवे हेतुमाह यत अनात्मादर्शनेनैवेति । पाक्षिकत्वेन तुल्यत्वेन वात्मानात्मदर्शनयोः प्राप्तावनात्मदर्शनव्युदासेनात्मदर्शनाय नियमपरिसंख्ये सम्भवत इत्यर्थः । यद्वा । आत्मदर्शनस्य प्राप्तत्वादपूर्वविध्यसम्भवेऽपि तदुपासनस्याप्राप्तत्वाद्विधिरस्त्वित्यत आह अनात्मेति । आत्मोपासनमनात्मदर्शनव्युदासेनात्मदर्शनावृत्त्यैव सिध्यति । आत्मदर्शनानां पौनःपुन्येन स्वत एव प्राप्तत्वात्ततश्च नोपासनेऽप्यपूर्वविधिरित्यर्थः ॥ ८८ ॥

नहि वयमिति । प्रमाणगम्ये वस्तुनि तदभावादविश्वासो भवति स्वतःसिद्धतया सततं प्रकाशमाने पुनरात्मनि न प्रमाणाभावादविश्वास इत्यर्थः । प्रत्यक्षादीनामनेवंविषयत्वात्तेषां स्वारम्भकविषयोपनिपातित्वादित्यादिना चायमर्थो वर्णयिष्यत इत्याह अत एवेति । किञ्च प्रमाणादीनां सिद्धेरनुभवाधीनत्वान्नानुभवरूपस्यात्मनः सिद्धिः प्रमाणाधीनेत्याह प्रमाणव्यवस्थायाश्चेति । अनुभवमात्राश्रयत्वादनुभवालम्बनत्वादनुभवमात्राधीनत्वादिति यावत् । वाक्यैकगम्यमिति । वाक्ये-

यदप्युक्त "मन्तरेण विधिमि" ति तदप्यबुद्धिपूर्वकमिव नः प्रतिभाति । यस्मात्कालान्तरफलदायिषु कर्मस्वेतद्धटते । आत्मलाभकाल एव फलदायिनि त्वात्मज्ञाने नैतत्सम- ञ्जसमित्याह ।

ज्ञानात्फले ह्यवाप्तेऽस्मिन्प्रत्यक्षे भवघातिनि ।
उपकाराय तन्नेति न न्याय्यं भाति नो वचः ॥ ९० ॥

यदपि जैमिनीयं वचनमुद्घाटयसि तदपि तद्विवक्षापरि- ज्ञानादेवोद्भाव्यते । किंकारणम् । यतो न जैमिनेरय- मभिप्राय आम्नायः सर्व एव क्रियार्थ इति । यदि ह्यय- मभिप्रायोऽभविष्य "दथातो ब्रह्मजिज्ञासा जन्माद्यस्य यत" इत्येवमादिब्रह्मवस्तुस्वरूपमात्रयाथात्म्यप्रकाशनपरं

---

कगम्यं यद्वस्तु धर्माधर्मादिलक्षणं । नान्यस्मात्तत्र विश्वसेत् । वाक्या- दन्यतो न विश्वसेत् । ना पुरुषः । अप्रमेये स्वतःसिद्धेऽविश्वासः विश्वा- सरहितः कथमात्मनि स्यादित्यक्षरयोजना । यद्वा । अप्रमेये स्वतः- सिद्ध आत्मनि कथं न विश्वास इत्यन्वयः ॥ ८९ ॥

दृष्टफलत्वादात्मज्ञानस्य विध्यभावे फलाभावाभिधानमनुभवविरु- द्धमित्यभिप्रेत्याह तदप्यबुद्धीति । विधिप्रयुक्तफलेषु हि विधिमन्तरेण प्रवृत्तौ फलाभावो न तु स्वरूपप्रयुक्तफलेषु । आत्मज्ञानं तु भोजनादि- वत्स्वरूपप्रयुक्तं फलम् । यथैव हि भोजनस्य स्वरूपप्रयुक्तमेव तृप्तिल- क्षणं फलमेवमात्मज्ञानस्यापि संसारोपरमलक्षणं फलं स्वरूपप्रयुक्तमेव । तस्माद्विधिमन्तरेणेत्यसमञ्जसमित्यर्थः । ज्ञानात्फल इति । सहेतुकसं- सारोपरमलक्षणे कैवल्ये फले ज्ञानात्प्रत्यक्षमनुभूयमाने विधिविकलमा- त्मज्ञानं फलाय न भवतीतिवचनं प्रत्यक्षपराहतत्वादत्यन्तमुपेक्षणीयमि- त्यर्थः ॥ ९० ॥

यत्पुनराम्नायस्य क्रियार्थत्वादित्युक्तं तदनूद्य निरस्यति यदपि जैमि- नीयमित्यादिना । आम्नायः सर्व एव क्रियामार्गो भवतीति जैमिनेरभि-

गम्भीरन्यायसन्दृब्धं सर्ववेदान्तार्थमीमांसनं श्रीमच्छा-
रीरकं नासूत्रयिष्यत् । असूत्रयच्च । तस्माज्जैमिनेरेवाय-
मभिप्रायो यथैव विधिवाक्यानां स्वार्थमात्रे प्रामाण्य-
मेवमैकात्म्यवाक्यानामप्यनधिगतवस्तुपरिच्छेदसाम्या-
दिति । अत इदमभिधीयते ।

अधिचोदनं य आम्नायस्तस्यैव स्यात्क्रियार्थता ।
तत्त्वमस्यादिवाक्यानां ब्रूत कर्मार्थता कथम् ॥ ९१ ॥

अपि च । ऐकात्म्यपक्ष इवादृष्टार्थकर्मसु भवत्पक्षेऽपि प्र-
वृत्तिर्दुर्लक्ष्या । यतः ।

स्वर्गं यियासुर्जुहुयादग्निहोत्रं यथाविधि ।
देहाद्व्युत्थापितस्यैवं कर्तृत्वं जैमिनेः कथम् ॥ ९२ ॥

---

प्रायो न भवतीत्यत्र किं प्रमाणमित्यत आह यदि ह्ययमिति । सिद्धस्वरू-
पस्याकर्त्तुरभोक्तुः प्रत्यगात्मनः प्रतिपादकवेदान्तवाक्यविचाराय पृथ-
क्शास्त्रारम्भान्यथानुपपत्तिस्तत्र प्रमाणमित्यर्थः । तर्ह्याम्नायस्य क्रियार्थ-
त्वादित्यस्य सूत्रस्य कोऽर्थ इत्यत आह अधिचोदनमिति । अधिचोदनं
चोदना नाम विधिश्चोदनामधिकृत्य वर्त्तत इत्यधिचोदनम् । चोदनायां
विधिप्रकरणे पठितानां सोऽरोदीदित्यादिसिद्धार्थवादवाक्यानामानर्थ-
क्यमनेन सूत्रेणाशङ्क्य विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्यु-
रिति विधिशेषत्वेन सार्थकत्वं तेषां सिद्धान्तितं न तु तद्विपरीतानां त-
त्त्वमस्यादिवाक्यानामित्यर्थः ॥ ९१ ॥

यत्पुनरुक्तं "कुर्वन्नेवेह कर्माणी"त्ययं मन्त्रः कृत्स्नमायुः कर्मण्येव वि-
नियुङ्क्त इति तदप्ययुक्तम् । आत्मनः परमार्थतः कर्त्तृत्वभोक्तृत्वाद्यभावा-
त्तद्विदः कर्माधिकारासम्भवादविद्वद्विषय एवायं मन्त्र इति प्रदर्शयितु-
माह अपि चेति । यथास्मत्पक्षे ज्ञाने विध्यभावादप्रवृत्तिस्तथा भवत्पक्षे
विध्यभ्युपगमेऽप्यग्निहोत्रादिकर्मस्वप्रवृत्तिरित्यर्थः । कुत इत्यत आह

न च प्रत्याख्याताशेषशरीरादिकर्मसाधनस्वभावस्यात्ममात्रस्य कर्मस्वधिकारः । यस्मात् ।

सर्वप्रमाणासम्भाव्यो ह्यहंवृत्त्यैकसाधनः ।
युष्मदर्थमनादित्सुर्जैमिनिः प्रेर्यते कथम् ॥ ९३ ॥

प्रवृत्तिकारणाभावाच्च । यस्मात् ।

सुखदुःखादिभिर्योग आत्मनो नाहमेक्ष्यते ।
पराक्प्रत्यगात्मत्वाज्जैमिनिः प्रेर्यते कथम् ॥ ९४ ॥

---

यत इति । देहान्तरोपभोग्यस्वर्गादिसाधनाग्निहोत्रादिविध्यन्यथानुपपत्त्या प्रमितस्य देहादिव्यतिरिक्तस्य निरवयवस्यात्मनो न परिस्पन्दपरिणामलक्षणक्रियाप्रवेशात्मकं कर्तृत्वमुपपद्यते । न च प्रयत्नाश्रयत्वेनापि कर्तृत्वं प्रयत्नस्यान्तःकरणधर्मत्वादनित्यस्य नित्यात्मगुणत्वानुपपत्तेश्चेत्यर्थः । स्वर्गं यियासुरग्निहोत्रं यथाविधि जुहुयादित्येवं देहाद्युत्थापितस्येत्यन्वयः । इतिशब्दश्चैवंशब्दसामर्थ्याल्लभ्यते जैमिनेः पक्ष इत्यर्थः ॥ ९२ ॥

एवं कर्त्रन्वयं निराकृत्याधिकारान्वयं निराचष्टे न च प्रत्याख्यातेति । प्रत्याख्यातमशेषं शरीरादिलक्षणं कर्मसाधनं येन तत्स्वभावस्यात एवात्ममात्रस्य न कर्मस्वधिकार इत्यर्थः । सर्वप्रमाणागोचरश्चेत्कथं व्यवह्रियत इत्यत आह अहंवृत्तीति । युष्मदर्थमहङ्कारादिलक्षणमनादित्सुः परमार्थतस्तत्संसर्गरहितो जैमिनिशब्दवाच्यशरीरोपलक्षितः प्रत्यगात्मा प्रेर्यते प्रवर्त्यते विधिना कथं । न कथंचिदित्यर्थः । आत्मा प्रेर्यते कथमित्यात्ममात्रस्य प्रवर्त्यत्वासम्भवे वक्तव्येऽपि जैमिन्यात्मग्रहणं तदुपालम्भार्थम् ॥ ९३ ॥

इदानीं भोक्त्रन्वयं निराचष्टे प्रवृत्तिकारणेति । प्रवृत्तिकारणं प्रयोजनम् । तदभावाच्च न प्रवृत्तिरित्यर्थः । कुतः प्रयोजनाभाव इत्यत आह यस्मादिति । आत्मनः सुखदुःखादिभिर्योगो नास्तीति यस्मात्तस्मादित्यर्थः । ननु कथं सुखदुःखादिभिरयोगः सुख्यहं दुःख्यहमिति सुखदुःखा-

किञ्च ।

**न तावद्योग एवास्ति शरीरेणात्मनः सदा ।**
**विषयैर्दूरतो नास्ति स्वर्गादौ स्यात्कथं सुखम् ॥ ९५ ॥**

यस्मादन्यथा नोपपद्यते ।

**नराभिमानिनं तस्मात्कारकाद्यात्मदर्शिनम् ।**
**मन्त्र आहोररीकृत्य "कुर्वन्निति" न निर्द्वयम् ॥ ९६ ॥**

---

दिसम्बन्धानुभवादित्याशङ्क्याह अहमेति । अहमाऽन्तःकरणेन सुखदुःखादेः सम्बन्धः सुख्यहमित्यादावीक्ष्यते न त्वात्मनेत्यर्थः । कुत आत्मना नेक्ष्यत इत्यत आह पराक्त्वादिति । सुखादीनां साक्ष्यत्वेन पराक्त्वादात्मनश्च साक्षित्वेन प्रत्यक्त्वात्तेषां पराग्रूपान्तःकरणपरिणामत्वादात्मधर्मत्वानुपपत्तेरित्यर्थः ॥ ९४ ॥

भोगसाधनैः सम्बन्धासम्भवादप्यात्मनोऽभोक्तृत्वं तथा ह्यसङ्गत्वादात्मनोऽहंप्रत्ययालम्बनेन शरीरेणापि न सम्बन्धोऽस्ति । अहंप्रत्ययानालम्बनैः पुनर्विषयैः शब्दादिभिरतिशयेन नास्ति सम्बन्धः । तथा सति स्वर्गादौ कथमस्य सुखादिना सम्बन्धः स्यादित्याह । किञ्चेति । न तावदिति ॥ ९५ ॥

एवं कर्त्रन्वयाधिकारान्वयभोक्त्रन्वयानामात्मनः परमार्थतोऽसम्भवादनाद्यविद्यावशाद्देहेन्द्रियादावहंममेतिमिथ्याभिमानवत एव कर्माधिकारो मन्त्रेण प्रदर्श्यत इति फलितमाह यस्मादित्यादिना । नराभिमानिनं नरत्वाभिमानिनं मनुष्यत्वाभिमानिनं । कारकाद्यात्मदर्शिनं कर्त्तृत्वाद्यात्मदर्शिनं । कर्त्तृत्वभोक्तृत्वप्रमातृत्वादिष्वात्माभिमानिनमविद्यावन्तमङ्गीकृत्य कुर्वन्नेवेत्यादिमन्त्रः कर्म कर्त्तव्यमभिधत्ते न निर्द्वयं नरत्वाद्यभिमानहीनं विद्यावन्तं "एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे" इति श्रुतेरित्यर्थः । एवंप्रकारे त्वयि जिजीविषति नरे नरमात्राभिमानिनि । इत एतस्मात्कर्म कुर्वतो वर्त्तमानात्प्रकारादन्यथा प्रकारान्तरं नास्ति येन प्रकारेणाशुभं कर्म न लिप्यते कर्मणा न लिप्यत इति श्रुत्यक्षरयोजना ॥ ९६ ॥

यच्चोक्तं "विरहय्येति" तदपि न सम्यगेव । तथापि तु न या काचित्क्रिया यत्र क्वचाध्याहरणीया किन्तु या यत्राभिप्रेतसम्बन्धं घटयितुं शक्नोत्याकाङ्क्षां च वाक्यस्य पूरयति सैवाध्याहरणीया । एवंविशिष्टा च क्रियास्माभिरभ्युपगतैव । सातूपादित्सितवाक्यार्थाविरोधिन्येव नाभूतार्थप्रादुर्भावफलेति । षड्भावविकाररहितात्मवस्तुनो निर्धूताशेषद्वैतानर्थस्यापराधीनप्रकाशस्य विजिज्ञापयिषितत्वादस्यस्मीत्यादिक्रियापदं स्वमहिमसिद्धार्थप्रतिपादनसमर्थमभ्युपगन्तव्यं न विपरीतार्थप्रतिपादनपरमिति ।

धावेदिति न दानार्थे पदं यद्वत्प्रयुज्यते ।
एधीत्यादि तथा नेच्छेत्स्वतःसिद्धार्थवाचिनि ॥ ९७ ॥

---

विरहय्येति यच्चोक्तं तच्च निरस्यति यच्चोक्तं विरहय्येतीति । सोऽयं देवदत्तः सोऽयं ग्राम इत्यादि वाक्येषु क्रियापदमन्तरेणापि वाक्यार्थप्रतीतेर्दर्शनान्न वाक्यार्थप्रतीतौ क्रियापदापेक्षेतिभावः । ननु तत्रापि पश्य गच्छेति क्रियापदं प्रयोक्तव्यमेव तन्न प्रयुज्यते द्वारं विव्रियतामित्यर्थे द्वारमितिप्रयोगवदित्याशङ्क्यैवमपि तद्वाक्यार्थप्रतिपत्त्युपयोगिक्रियाभिधायिन एवपदस्याध्याहरणीयत्वात्प्रवर्त्तकक्रियापदमेवाध्याहरणीयमिति नियन्तुमशक्यत्वाद्वेदान्तवाक्येषु चास्यस्मीत्यादिक्रियापदस्याभ्युपगतत्वान्न कश्चिद्दोष इत्याह तथापि त्विति । नाभूतार्थप्रादुर्भावफलेति । फलेत्युत्पत्तिविकृत्यादिफला न भवतीत्यर्थः । नाभूतार्थप्रादुर्भावफलेत्यत्रेतिशब्दस्य हेत्वर्थस्यासीत्यादिक्रियापदमित्यनेन सम्बन्धः । कुतो नाभूतार्थप्रादुर्भावफलेत्यत आह षड्भावेति । अनर्थनिवृत्त्यर्थमपि न क्रियाध्याहारापेक्षेत्याह निर्धूतेति । तर्हि प्रतीत्यर्थमपेक्षतामित्यत आह अपराधीनेति । उक्तमेवार्थं दृष्टान्तेनोपपादयति धावेदितीति । हिरण्यं दद्यादित्येतस्मिन्नर्थे हिरण्यं धावेदित्यादिपदमयोग्यत्वाद्यथा न प्रयुज्यते

न च यथोक्तवस्तुवृत्तप्रतिपादनव्यतिरेकेण तत्त्वमस्यादिवाक्यं वाक्यार्थान्तरं वक्तीति शक्यमध्यवसातुमित्याह ।

तत्त्वमस्यादिवाक्यानां स्वतःसिद्धार्थबोधनात् ।
अर्थान्तरं न सन्द्रष्टुं शक्यते त्रिदशैरपि ॥ ९८ ॥

यस्मादेवम् ।

"अतः सर्वाश्रमाणां तु वाङ्मनःकायकर्मभिः ।
स्वनुष्ठितै"र्न मुक्तिः स्याज्ज्ञानादेव हि सा यतः ॥९९॥

तस्माच्च कारणादेतदप्युपपन्नम् ।

स्वमनोरथसंक्लृप्तप्रज्ञाध्मातधियामतः ।
श्रोत्रियेष्वेव वाचस्ताः शोभन्ते नात्मवेदिषु ॥ १०० ॥

इति श्रीमच्छङ्करभगवत्पूज्यपादशिष्यसुरेश्वराचार्यकृतौ नैष्कर्म्यसिद्धौ प्रथमोऽध्यायः ॥ १ ॥

---

तद्वदेधिभवेत्यादिपदं वृद्ध्यादिविकारहीनात्मवस्तुप्रतिपादकवाक्येन प्रयोक्तव्यमित्यर्थः । एधीत्येतदस्तेर्धातोर्लोट्मध्यमपुरुषैकवचनम् ॥ ९७ ॥

ननु तत्त्वमस्यादिवाक्यानां स्वतःसिद्धार्थवाचकत्वमसिद्धं तेषां तदहमसीत्युपासीतेत्युपासनाविधिपरत्वादित्यत आह न चेति । उपक्रमोपसंहारादि षड्विधलिङ्गाधिगतपरिनिष्ठितवस्तुप्रतिपादनतात्पर्यविरोधादित्यर्थः ॥ ९८ ॥

यत्पुनः पूर्ववादिनोपसंहृतमतः सर्वाश्रमाणामिति तत्राह अत इति ॥ ९९ ॥

तत्र चास्माभिरपि यदुक्तमिति हृष्टधियामित्यादि तदपि युक्तमेवोक्तमित्युपसंहरति तस्माच्चेति ॥ १०० ॥

इति श्रीमज्ज्ञानोत्तममिश्रविरचितायां नैष्कर्म्यसिद्धिचन्द्रिकायां प्रथमोऽध्यायः समाप्तः ॥ १ ॥

# द्वितीयोऽध्यायः ।

प्रत्यक्षादीनामनेवंविषयत्वात्तेषां स्वारम्भकविषयोपनिपातित्वादात्मनश्चाशेषप्रमेयवैलक्षण्यात्सर्वानर्थैकहेत्वज्ञानापनोदिज्ञानदिवाकरोदयहेतुत्वं वस्तुमात्रयाथात्म्यप्रकाशनपटीयसस्तत्त्वमस्यादेर्वचस एवेति बह्वीभिरुपपत्तिभिः प्रदर्शितम् । अतस्तदर्थाप्रतिपत्तौ यत्कारणं तदपनयनाय द्वितीयोऽध्याय आरभ्यते ।

श्रावितो वेत्ति वाक्यार्थं नचेत्त्वमसीत्यतः ।
त्वम्पदार्थानभिज्ञत्वादतस्तत्प्रक्रियोच्यते ॥ १ ॥

---

श्रीगणपतिसरस्वतिसद्गुरुभ्यो नमोनमः ॥ हरिः । ॐ । वृत्तसंकीर्त्तनपूर्वकं वर्त्तिष्यमाणस्याध्यायस्य तात्पर्यमाह प्रत्यक्षादीनामिति । प्रत्यक्षादिशब्देन श्रोत्रादीनामिह ग्रहणम् । तेषामनेवंविषयत्वादद्वैतात्माविषयत्वादित्यर्थः । कुतस्तदविषयत्वमित्यत आह तेषामिति । तेषां श्रोत्रादीनां स्वारम्भकशब्दादिवदाकाशादिभूतारब्धत्वात्तद्विषयत्वाच्चात्माविषयत्वमित्यर्थः । श्रोत्रं स्वग्राह्यजातीयविशेषगुणवद्द्रव्यारब्धं बाह्येन्द्रियत्वाच्चक्षुरादिवत् । त्वगिन्द्रियं वायवीयं नियमेन स्पर्शव्यञ्जकत्वाद्व्यजनादिजनितवायुवत् । तथा चक्षुस्तैजसं नियमेन रूपग्राहकत्वाद्दीपवत् । रसनमप्याप्यं नियमेन रसव्यञ्जकत्वादास्योदकवत् । घ्राणं पार्थिवं नियमेन गन्धव्यञ्जकत्वात्कुङ्कुमगन्धाभिव्यञ्जकघृतवदित्यनुमानात् । "यथा सर्वासामपां समुद्र एकायनमेवं सर्वेषां स्पर्शानां त्वगेकायनम् । एवं सर्वेषां रसानां जिह्वैकायनम् । एवं सर्वेषां गन्धानां नासिकैकायनम् । एवं सर्वेषां रूपाणां चक्षुरेकायनम् । एवं सर्वेषां शब्दानां श्रोत्रमेकायनमि"त्यागमाच्च श्रोत्रादीनां भौतिकत्वं तद्विषयत्वं चेत्यवगन्तव्यम् । आत्मा पुनः शब्दादिहीनत्वात्तद्विषयित्वाच्च न तेषां विषय इत्याह आ-

योऽयमहंब्रह्मेति वाक्यार्थस्तत्प्रतिपत्तिर्वाक्यादेवेति प्रत्यक्षादीनामनेवंविषयत्वादित्यवादिषं तस्य विशुद्ध्यर्थमनैकान्तिकत्वं पूर्वपक्षत्वेनोपस्थाप्यते ।

कृत्स्नानात्मनिवृत्तौ च कश्चिदाप्नोति निर्वृतिम् ।
श्रुतवाक्यस्मृतेश्चान्यः स्मार्यते च वचोऽपरः ॥ २ ॥

---

त्मनश्चेति । कथं पुनरात्माज्ञाननिवृत्तिरित्यत आह सर्वानर्थेति । एवं प्रथमाध्यायेन समन्वये प्रदर्शिते तत्र प्रत्यक्षादिविरोधाशङ्कायां तत्परिहाराय द्वितीयाध्याय आरभ्यत इत्याह अतस्तदर्थेति । तस्य वाक्यस्यार्थाप्रतिपत्तौ यत्कारणं पदार्थापरिज्ञानं तस्य प्रत्यक्षादिविरोधाशङ्कासमुद्भूतासम्भावनाविपरीतभावनानिरासेनापनयनाय द्वितीयारम्भ इत्यर्थः । पूर्वोत्तराध्याययोर्हेतुहेतुमल्लक्षणसम्बन्धो दर्शितः श्रावित इति । वाक्यार्थज्ञानस्य पदार्थप्रतिपत्तिपूर्वकत्वात्त्वंपदार्थाज्ञाने सति तत्त्वमसीत्यतो वाक्याद्वाक्यार्थं श्रावितो यदि न जानात्यतस्तत्प्रक्रिया तस्य त्वंपदार्थस्य प्रक्रिया प्रतिपादनं क्रियत इत्यर्थः ॥ १ ॥

वृत्तसंकीर्त्तनपूर्वकमुत्तरश्लोकस्य तात्पर्यमाह योऽयमिति । वाक्यादेवेत्यत्रेतिशब्दः प्रकारवचनः । अहं ब्रह्मेत्येवंप्रकारा तत्प्रतिपत्तिरित्यर्थः । वाक्यव्यतिरेकेणापि प्रतिपत्तिदर्शनान्न वाक्यस्य नियतहेतुत्वमित्यनैकान्तिकत्वमेव दर्शयति कृत्स्नेति । कश्चिद्विमलमतिः कृत्स्नप्रपञ्चविलापेन भेदकोपाधेरभावादेकत्वं वाक्यमन्तरेणापि प्रतिपद्यते यथा विराडात्मा "यन्मदन्यन्नास्ति कस्मान्नु बिभेमीतीति" कश्चिच्छ्रुतं वाक्यं स्मृत्वा प्रतिपद्यते । यथा भृगु"र्यतो वा इमानि भूतानि जायन्त" इति वाक्यस्मृतेः "आनन्दो ब्रह्मेति व्यजानादि"ति । कश्चिदाचार्येण वाक्यं स्मार्यमाणोऽसम्भावनाविपरीतभावनानिराकरणमुखेन साक्षादहमस्मि परं ब्रह्मेति वाक्यार्थं प्रतिपद्य मुच्यते यथा श्वेतकेतुर्नवकृत्वस्तत्त्वमसीति । श्वेतकेतुभृग्वोरेतयोरुभयोरपि वाक्यस्मरणमेव हेतुर्न वाक्यमिति त्रिष्वपि पक्षेषु न वाक्यं हेतुरित्यर्थः ॥ २ ॥

एतत्प्रसङ्गेन श्रोत्रन्तरोपन्यासमुभयत्रापि सम्भावनायाह ।

वाक्यश्रवणमात्राच्च पिशाचकवदाप्नुयात् ।
त्रिषु याहच्छिकी सिद्धिः स्मर्यमाणे तु निश्चिता ॥ ३ ॥

नायमनैकान्तिको हेतुः । यतः ।

सर्वोऽयं महिमा ज्ञेयो वाक्यस्यैव यथोदितः ।
वाक्यार्थं नह्यृते वाक्यात्कश्चिज्जानाति तत्त्वतः ॥ ४ ॥

वाक्यं च प्रतिपादनाय प्रवृत्तं सत्प्रतिपादयत्येव सर्वप्रमाणानामप्येवंवृत्तत्वात् ।

---

कथं तर्हि वाक्यस्य हेतुत्वाशङ्केति तत्राह एतत्प्रसङ्गेनेति । वाक्यव्यतिरेकेण विराट्प्रभृतीनां त्रयाणां ज्ञानं दृष्टम् । पिशाचकस्य पुनर्वाक्यश्रवणादपि तद्दृष्टमित्युभयत्रापि ज्ञानोत्पत्तिदर्शनान्न वाक्यमेव नियमेन ज्ञानजन्महेतुरिति ज्ञापनायेत्यर्थः । पिशाचकवदिति । पिशाचको नाम कश्चिदरण्यं गतः स्वकर्मणा तत्राधीयमानं तत्त्वमस्यादिवाक्यमाकर्ण्य जन्मान्तरसंस्कारवशात्तदैव वाक्यार्थं प्रतिपेद इति लोके प्रसिद्धमित्यर्थः । अयं पुनरत्र विशेष इत्याह त्रिष्विति ॥ ३ ॥

इदानीं सिद्धान्तयति नायमिति । लिङ्गस्मरणस्य गमकत्वेऽपि न यथा लिङ्गस्यागमकत्वमेवं वाक्यस्मरणस्य गमकत्वेऽपि न वाक्यस्यागमकत्वं वाक्यस्मरणस्योभयत्रापि द्वारत्वादित्याह सर्वोऽयमिति । यत्पुनरुक्तं कृत्स्नानात्मनि वृत्ताविति तत्रापि प्रपञ्चाभावव्यतिरिक्तनिरतिशयानन्दरूपब्रह्मावगतिर्न वाक्यं विना सम्भवति तस्य वेदान्तवाक्यव्यतिरिक्तप्रमाणागोचरत्वादित्याह वाक्यार्थमिति ॥ ४ ॥

ननु वाक्यमपि प्रमाणान्तरसंवादाभावात्स्वार्थं निश्चाययितुं न शक्नोतीत्यत आह वाक्यं चेति । स्वविषयावबोधनाय प्रवृत्तानां प्रमाणानां प्रमाणान्तरसंवादापेक्षया कुण्ठितभावः क्वचिदपि न दृश्यत इत्यर्थः ।

नाहंग्राह्ये न तद्धीने न प्रत्यङ्नापि दुःखिनि ।
विरोधः सदसीत्यस्माद्वाक्याभिज्ञस्य जायते ॥ ५ ॥
नाविरक्तस्य संसारान्निविवृत्सा ततो भवेत् ।
न चानिवृत्ततृष्णस्य पुरुषस्य मुमुक्षुता ॥ ६ ॥
न चामुमुक्षोरस्तीह गुरुपादोपसर्पणम् ।
न विना गुरुसम्बन्धं वाक्यस्य श्रवणं भवेत् ॥ ७ ॥

---

ननु न वयं प्रमाणान्तरसंवादाभावादप्रतिपादकं ब्रूमः किन्तु तद्विरुद्धार्थत्वादिति तत्राह नाहमिति । अहंग्राह्यमहंमनुष्य इत्यहंप्रत्ययवेद्यं यच्छरीरं तस्मिंस्तत्त्वमसीति वाक्यश्रवणाद्विरोधप्रतिभासो न भवति तस्य त्वंपदानभिधेयतया तत्पदार्थेन सामानाधिकरण्यानङ्गीकारात् । न तद्धीन इति । चक्षुषा पश्यामि श्रोत्रेण शृणोमीत्येवंकरणत्वेनानुभवादहं चक्षुः पश्यामीत्यननुभवाच्चाहंप्रत्ययरहितेऽपि न विरोधप्रतिभासस्तेनापि सदसीति सामानाधिकरण्यानङ्गीकारात्तथा प्रत्यक्प्रतीचिप्रत्यगात्मन्यपि न विरोधप्रतिभासस्त्वंपदलक्ष्यस्य तस्य तत्पदलक्ष्येणैकत्वाविरोधात् । अत्र प्रत्यक्शब्दोऽव्ययत्वात्सप्तम्यर्थे वर्त्तते । अन्चु गतिपूजनयोरितिधातो "ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चामि"ति क्विन्प्रत्ययान्तात्प्रत्यक्शब्दः । "दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिरि"त्यस्तातौ तद्धिते कृते तस्य चा"ञ्चेर्लुगि"ति लुकिकृते "तद्धितश्चासर्वविभक्तिरि"त्यव्ययत्वोपपत्तेः । तथा दुःखिनि सुखदुःखादिधर्मवदन्तःकरणविशिष्टेऽपि न विरोधप्रतिभासस्तस्यापि त्वंशब्दवाच्यस्य तत्पदलक्ष्येणैकत्वानङ्गीकारात् । एवं वाक्यतात्पर्याभिज्ञस्य चतुर्ष्वपि पदार्थेषु न विरोधबुद्धिस्तेन प्रमाणान्तरविरोधाभावादप्यप्रतिपादकत्वं वाक्यस्य न स्यादित्यर्थः ॥ ५ ॥

तर्हि वाक्यस्य प्रमाणान्तरसंवादापेक्षाभावात्तद्विरोधाभावाच्च वाक्यश्रवणमात्रेण वाक्यार्थं सर्व एव प्रतिपद्येरन् । न च तथा प्रतिपद्यन्त इत्याशङ्क्य तेषां वैराग्यमुमुक्षुत्वाद्यधिकारिविशेषणाभावादधिकारिणः

तथा पदपदार्थौ च न स्तो वाक्यमृते क्वचित् ।
अन्वयव्यतिरेकौ च तावृते स्तां किमाश्रयौ ॥ ८ ॥
अन्वयव्यतिरेकाभ्यां विना वाक्यार्थबोधनम् ।
न स्यात्तेन विना ध्वंसो नाज्ञानस्योपपद्यते ॥ ९ ॥
विनाज्ञानप्रहाणेन पुरुषार्थः सुदुर्लभः ।
तस्माद्यथोक्तसिद्ध्यर्थं परो ग्रन्थोऽवतार्यते ॥ १० ॥
वर्चस्कं त्वन्नकार्यत्वाद्यथानात्मेति गम्यते ।
तद्भागः सेन्द्रियो देहस्तद्वत्किमिति नेष्यते ॥ ११ ॥

आद्यन्तयोरनात्मत्वे प्रसिद्धे मध्येऽपि कः प्रतिबन्धः ।

प्रागनात्मैव जग्धं सदात्मतामेत्यविद्यया ।
स्रगालेपनवद्देहं तस्मात्पश्येद्विविक्तधीः ॥ १२ ॥

---

प्रमितिजनको वेद इति न्यायाच्च नायं दोष इत्युत्तरश्लोकपञ्चकेन प्रतिपादयति नाविरक्तस्येत्यादिना । न चानिवृत्ततृष्णस्येति संसारादनिविवृत्सोरित्यर्थः ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

अतोऽपेक्षितवाक्यार्थज्ञानसिध्यर्थमन्वयव्यतिरेकाभ्यां त्वंपदार्थपरिशोधनायोत्तरग्रन्थसंदर्भ इत्युपसंहारव्याजेनाह तस्मादिति ॥ १० ॥

यत्पुन"र्नाहंग्राह्यो न तद्धीन" इति तस्य शरीरेन्द्रियवर्गस्य चानात्मत्वं सूचितं तत्प्रपञ्चनायाह वर्चस्कमिति । वर्चस्कस्य पुरीषस्यान्नपरिणामरूपस्य यथानात्मत्वं गम्यते तद्वत्तद्भागयोरन्नपरिणामयोर्देहेन्द्रिययोरनात्मत्वमनुमानादवगन्तव्यमित्यर्थः ॥ ११ ॥

न केवलमन्नकार्यत्वादनात्मत्वमनुमातव्यमन्नात्मत्वादप्यन्नवदेवानात्मत्वमनुमातव्यमित्याह आद्यन्तयोरिति । आद्यन्तयोरोदनपुरीषयोरनिवारितानात्मत्वप्रतिपत्तिरुदीर्यमाणा मध्ये देहेन्द्रिययोः केन प्रतिबद्धेत्यर्थः । आगन्तुकत्वादप्यनात्मत्वमनुमेयमित्याह स्रगालेपनवदिति ॥१२॥

अथैवमपि मद्वचनं नाद्रियसे स्वयमेवैतस्माच्छरीरादशुचिराशेर्निराशो भविष्यसि ।

मन्यसे तावदस्मीति यावदस्मान्न नीयसे ।
श्वभिः क्रोडीकृते देहे नैवं त्वमभिमंस्यसे ॥ १३ ॥

शिर आक्रम्य पादेन भर्त्सयत्यपरान् शुनः ।
दृष्ट्वा साधारणं देहं कस्मात्सक्तोऽसि तत्र भोः ॥ १४ ॥

श्रुतिपरिप्रापितोऽयमर्थोऽनात्मा बुद्ध्यादिदेहान्त इतीदमाह ।

बुसव्रीहिपलालांशैर्बीजमेकं त्रिधा यथा ।
बुद्धिमांसपुरीषांशैरन्नं तद्वदवस्थितम् ॥ १५ ॥

यथोक्तार्थप्रतिपत्तौ सत्यां न रागद्वेषाभ्यां विक्रियते विपश्चिदित्यस्यार्थस्य प्रतिपत्तये दृष्टान्तः ।

---

इदानीमपायित्वादप्यनात्मत्वमनुमेयमित्याह अथैवमपीति । मन्यस इति । तावदेव तव देहेऽहम्बुद्धिर्भवति यावदस्माद्देहादुत्क्रम्य न लोकान्तरं गमिष्यसि । गते तु सारमेयादयस्तमिमं देहं क्रोडीकुर्वीरन् । क्रोडीकृते तु तस्मिन्निदानीमिवाभिमानो न भवतीत्यर्थः ॥ १३ ॥

शरीरमेव तत्त्वमिति शरीरे ममत्वं विशेषतो न करणीयं शुनामपि साधारणत्वादित्याह शिर आक्रम्येति । भर्त्सयत्येकश्चेति शेषः ॥ १४ ॥

यदुक्तं "तद्भागः सेन्द्रियो देह" इति तदसिद्धमिति नाशङ्कनीयं श्रुतिसिद्धत्वादित्याह श्रुतीति । यद्वा । न केवलमनुमानादेव देहेन्द्रिययोरनात्मत्वावगमः किंत्वागमादपीत्याह श्रुतीति । "अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मन" इति शरीरस्य मनसश्चान्नकार्यत्वं दर्शयतीत्यर्थः ॥ १५ ॥

वर्चस्के सम्परित्यक्ते दोषतश्चावधारिते ।
यदि दोषं वदेत्तस्मै किं तत्रोच्चरितुर्भवेत् ॥ १६ ॥

तद्वत्सूक्ष्मे तथा स्थूले देहे त्यक्ते विवेकतः ।
यदि दोषं वदेत्ताभ्यां किं तत्र विदुषो भवेत् ॥ १७ ॥

एतावदेव ह्यहं ब्रह्मास्मीति वाक्यार्थाप्रतिपत्तौ कारणं यदुत बुद्ध्यादौ देहान्ते ह्यहंममेति निःसन्धिबन्धनो ग्रहस्तद्व्यतिरेके हि न कुतश्चिद्विभज्यत एकल एव प्रत्यगात्मन्यवतिष्ठत इत्याह ।

रिपौ बन्धौ स्वदेहे च समैकात्म्यं प्रपश्यतः ।
विवेकिनः कुतः कोपः स्वदेहावयवेष्विव ॥ १८ ॥

इतश्चानात्मा देहादिः ।

घटादिवच्च दृश्यत्वात्तैरेव करणैर्दृशेः ।
स्वप्ने चानन्वयाज्ज्ञेयो देहोऽनात्मेति सूरिभिः ॥१९॥

---

एवं स्थूलसूक्ष्मदेहद्वयव्यतिरिक्तात्मवेदनस्य दृष्टमेव फलं सर्वानर्थबीजभूतरागद्वेषयोर्निवृत्तिरिति सदृष्टान्तमाह यथोक्तार्थेत्यादिना । उच्चरितुरुत्स्रष्टुरित्यर्थः ॥ १६ ॥

तद्वदिति ॥ १७ ॥

वाक्यार्थप्रतिपत्तिप्रतिबन्धकत्वादपि देहद्वयेऽहङ्कारममकारलक्षणो भेदाभिमानो विवेकिभिः परिहरणीय इति श्रोतॄणां यत्नगौरवसाधनायाह एतावदेवेति । निःसन्धिबन्धन इति । बाधकप्रत्ययशून्य इत्यर्थः । विवेकस्य पुनः फलमाह तद्व्यतिरेके हीति । समैकात्म्यं प्रपश्यत इति । शत्रुदेहे मित्रदेहे स्वदेहे च निर्विशेषैकात्म्यमनुसंदधानस्येत्यर्थः ॥ १८ ॥

इदानीं दृश्यत्वादागमापायित्वाच्च देहस्यानात्मत्वमित्याह इतश्चेति । यैः करणैर्घटादयो दृश्यन्ते तैरेव करणैर्दृशेर्द्रष्टुरात्मनो देहस्य दृश्यत्वा-

देहादिकार्यकरणसंघातव्यतिरेकाव्यतिरेकदर्शिनः प्रत्यक्षत एव विरुद्धं कार्यमुपलभ्यते ।

चतुर्भिरूह्यते यत्तत्सर्वशक्त्या शरीरकम् ।
तूलायते तदेवाहंधियाघ्रातमचेतसाम् ॥ २० ॥

प्रसिद्धत्वात्प्रकरणार्थोपसंहारायाह ।

स्थूलं युक्त्या निरस्यैवं नभसो नीलतामिव ।
देहं सूक्ष्मं निराकुर्यादतो युक्तिभिरात्मनः ॥ २१ ॥

कथं देहं सूक्ष्मं निराकुर्यादिति । उच्यते ।

अहंममत्वयत्नेच्छानात्मधर्माः कृशत्ववत् ।
कर्मत्वेनोपलभ्यत्वादपायित्वाच्च वस्त्रवत् ॥ २२ ॥

---

त्स्वप्ने च व्याघ्रादिशरीरेण व्यवहरतो जाग्रति दृष्टे देहेऽहमित्यभिमानाभावेनास्यानन्वयाच्चानात्मत्वं वेदितव्यमित्यर्थः ॥ १९ ॥

वक्ष्यमाणविवेकफले श्रद्धाजननाय मिथ्याज्ञानविवेकज्ञानयोरनुभवसिद्धः फलभेद इति दर्शयति देहादीति । चतुर्भिरिति । स्वदेहः परदेहो वा वाहने स्थापयित्वा चतुर्भिरूह्यो भवति स एवाविदुषामहम्बुद्धिपरिगृहीतस्तूलायते तूलवदाचरतीति प्रत्यक्षमेव विरुद्धं कार्यमित्यर्थः । यद्वा । स्वभावतः सुषुप्तादावशक्योद्वाहो जागरितेऽहन्धीमात्रेण सुखोद्वाहितामापद्यमानः शिबिकादिवत्स्वोद्वाहकमहंकर्त्तारमवगमयतीति दर्शयति देहादीत्यादिना । यद्वा । एकमेव शरीरमहम्बुद्धिरहितमतिगौरवान्महता क्लेशेन नीयते तदेवाहम्बुद्धिगृहीतमत्यन्तलाघवात्तूलवदाचरतीत्येवं विरुद्धकार्यदर्शनादनात्मैवायं देह इत्याह देहादीत्यादिना ॥२०॥

लोकायतिकव्यतिरिक्तसर्ववादिनामात्मनः स्थूलदेहव्यतिरेके विवादाभावात्सर्वजनप्रसिद्धत्वाच्च न तत्प्रतिपादनायातीवाग्रहः क्रियत इत्याह प्रसिद्धत्वादिति ॥ २१ ॥

कथमिति । अहंममत्वेति । अहङ्कारममकारबुद्धिसुखदुःखेच्छाद्वेषप्र-

वैधर्म्ये दृष्टान्तः ।

नोष्णिमानं दहत्यग्निः स्वरूपत्वाद्यथा ज्वलन् ।
तथैवात्मात्मनो विद्यादहं नैवाविशेषतः ॥ २३ ॥

एकस्यात्मनः कर्मकर्तृभावः सर्वथा नोपपद्यत इति श्रुत्वा मीमांसकः प्रत्यवतिष्ठते । अहम्प्रत्ययग्राह्यत्वाद्ग्राहक आत्मेति तन्निवृत्त्यर्थमाह ।

यत्कर्मको हि यो भावो नासौ तत्कर्तृको यतः ।
घटप्रत्ययवत्तस्मान्नाहं स्याद्द्रष्टृकर्मकः ॥ २४ ॥

---

यत्नादयो वस्तुतो नात्मनो धर्मा भवितुमर्हन्तीत्यर्थः । तत्र हेतुः कर्मत्वेनोपलभ्यत्वादिति । उपलभ्यत्वादित्युक्ते प्रत्यगात्मनोऽप्यसत्प्रत्ययगोचरतयोपलभ्यमानत्वमस्तीति तद्व्यावर्त्तनाय विशिनष्टि कर्मत्वेनेति । अहङ्कारादयो नात्मधर्मा दृश्यत्वात्कार्श्यादिवत् । सैव प्रतिज्ञापायित्वाद्वस्त्रादिवदिति प्रयोगः । एवमिच्छादीनामनात्मधर्मत्वप्रतिपादनेन तद्धर्मवतोऽन्तःकरणस्य सूक्ष्मदेहस्यानात्मत्वं साधितमिति द्रष्टव्यम् ॥ २२ ॥

विपक्षे बाधकमाह वैधर्म्य इति । अहङ्कारादेरात्मधर्मत्वे स्वरूपत्वे दृश्यत्वासम्भवोऽपि स्यादित्यत्र लोकप्रसिद्धदृष्टान्तोऽभिधीयत इत्याह नोष्णिमानमिति । यथा ज्वलन्नप्यग्निः स्वरूपभूतं धर्मभूतं चोष्णिमानं न दहति न विषयीकरोति स्वरूपत्वाद्धर्मत्वाद्वा तद्वदात्माप्यात्मनः स्वरूपभूतं धर्मभूतं वाहमहङ्कारादिकं न विद्यात्स्वरूपत्वाविशेषाद्वा धर्मत्वाविशेषाद्वेत्यर्थः ॥ २३ ॥

इदानीं भाट्टमतमाशङ्क्य निराकरोति एकस्येत्यादिना । अहम्प्रत्यय आत्मकर्मको न भवति आत्मकर्तृकत्वाद्घटप्रत्ययवदित्यनुमानमाह यत्कर्मक इति ॥ २४ ॥

अत्राह प्रत्यक्षेणात्मनः कर्मकर्तृत्वाभ्युपगमे तत्पादोपजीविनानुमानेन प्रत्यक्षोत्सारणमयुक्तमिति चोद्यं तन्निराकरणाय प्रत्यक्षोपन्यासः ।

यत्र यो दृश्यते द्रष्ट्रा तस्यैवासौ गुणो न तु ।
द्रष्टृस्थं दृश्यतां यस्मान्नैवेयाद्द्रष्टृबोधवत् ॥ २५ ॥

प्रत्यक्षेणैव भवदभिमतस्य प्रत्यक्षस्याभासीकृतत्वात्तुल्यमेवानुमानम् । अतस्तदेव प्रक्रियते तत्र च विकल्पदूषणाभिधानम् ।

नात्मना न तदंशेन गुणः स्वस्योऽवगम्यते ।
अभिन्नत्वात्समत्वाच्च निरंशत्वादकर्मतः ॥ २६ ॥

---

ननु मामहं जानामीत्यात्मनोऽहम्प्रत्ययं प्रति कर्तृत्वकर्मत्वयोः प्रत्यक्षानुभवात्तत्कर्मत्वनिराकरणानुमानं कालात्ययापदिष्टमिति शङ्कतेऽत्राहेति । अहमित्यत्रान्तःकरणस्य प्रत्यगात्मदृश्यत्वादहम्प्रत्ययस्यापि तद्गतत्वेनोपलभ्यमानस्य तद्धर्मत्वमेव युक्तं द्रष्टात्मगतत्वे दृश्यत्वानुपपत्तेस्तस्मादन्तःकरणमेवाहम्प्रत्ययसाक्षिणा दृश्यत इत्यनुभवो न त्वात्मा मामहं जानामीत्यनुभवस्यान्तःकरणविशिष्टविषयत्वात्केवलात्मविषयत्वाभावादित्यभिप्रेत्य परिहरति तन्निराकरणायेति । यत्रान्तःकरणे योऽहम्प्रत्ययो द्रष्ट्रा साक्षिणा दृश्यते तस्यैवान्तःकरणस्याहम्प्रत्ययो धर्मो भवति द्रष्टुर्दृश्यत्वाद्द्रष्टृस्थत्वे द्रष्टृदृश्यत्वायोगात्तस्मादन्तःकरणधर्म एवासावहम्प्रत्यय इत्यर्थः ॥ २५ ॥

अतस्तदेव प्रक्रियत इत्यात्मोपलभ्यस्याहङ्कारस्यात्मधर्मत्वमनुपपन्नमिति प्रकारान्तरेण पुनः साध्यत इत्यर्थः । आत्मधर्मश्चेदहम्प्रत्ययः किमयमात्मनाधिगम्यते किंवा तदंशेनेति विकल्प्योभयथापि न सम्भवतीत्युच्यत इत्याह तत्र चेति । स्वगतस्य गुणस्य स्वग्रहणमन्तरेण स्वगतत्वेन ग्रहणायोगात्स्वस्य च स्वेनाभिन्नत्वादेव ग्रहणानुपपत्तेः स्वांशे-

न युगपन्नापि क्रमेणोभयथा चैकस्य धर्मिणो ग्राह्यग्राहकत्वमुपपद्यत इति प्रतिपादनायाह ।

द्रष्टृत्वेनोपयुक्तत्वात्तदैव स्यान्न दृश्यता ।
कालान्तरे चेद्दृश्यत्वं न ह्यद्रष्टृकमिष्यते ॥ २७ ॥

सन्तु काममनात्मधर्मा ममत्वादयो यथोक्तन्यायबलादनात्मतयैव च तेषु व्यवहारादहंरूपस्य तु प्रत्यगात्मसम्बन्धितयैव प्रसिद्धेरहंब्रह्मास्मीति श्रुतेश्चानात्मधर्मत्वमयुक्तमिति चेत्तन्न ।

अहंधर्मस्त्वभिन्नश्चेदहंब्रह्मेति वाक्यतः ।
गौरोऽहमित्यनैकान्तो वाक्यं तद्व्यपनेतृ तत् ॥ २८ ॥

---

नापि स्वस्यात्मत्वादेव ग्रहणायोगान्निरंशत्वादेव स्वांशेन स्वस्य ग्रहणमिति वक्तुमशक्यत्वाच्च । एवमुक्तन्यायेनात्मनः कर्मत्वाभावात्तद्गतोऽपि गुणो न तेन गृह्यत इत्यर्थः ॥ २६ ॥

ग्राह्यस्य ग्राहकत्वेऽपि किं युगपदेव ग्राह्यग्राहकभावः किंवा क्रमेण । न तावदाद्यो युगपदेव ग्राहकत्वेन परिसमाप्तस्य निरंशस्य तदैव ग्राह्यत्वेनावस्थानायोगात् । नापि क्रमेण तदाग्राहकाभावादेव ग्राह्यत्वानुपपत्तेरित्याह न युगपदिति ॥ २७ ॥

नन्वस्तु ममत्वयत्नेच्छादीनामनात्मधर्मत्वं तद्वदहम्प्रत्ययस्यानात्मधर्मत्वमयुक्तं तस्यात्मधर्मत्वं युक्तं प्रसिद्धेरहं ब्रह्मास्मीति विद्यादशायामपि तस्यानुवृत्तेश्चेति शङ्कते सन्तु काममिति । श्लोकेन परिहरति तन्नेति । गौरोऽहमिति सामानाधिकरण्येऽपि यथा गौरत्वं नात्मधर्मस्तथाहमात्मेत्यहम्प्रत्ययस्यात्मसामानाधिकरण्येन प्रसिद्धावपि नात्मधर्मत्वं सिद्ध्यति । अहं ब्रह्मास्मीति तु सामानाधिकरण्यं बाधायां न पुनस्तदेकत्वविवक्षयेत्यर्थः ॥ २८ ॥

कथं वाक्यं तद्व्यपनेतृ तदिति । उच्यते ।

योऽयं स्थाणुः पुमानेष पुंधिया स्थाणुधीरिव ।
ब्रह्मास्मीतिधियाशेषामहम्बुद्धिं निवारयेत् ॥ २९ ॥

अहम्परिच्छेदव्यावृत्तौ न किञ्चिदव्यावृत्तं द्वैतजातमवशिष्यते द्वितीयसम्बन्धस्य तन्मूलत्वात् । अत आह ।

निवृत्तायामहम्बुद्धौ ममधीः प्रविलीयते ।
अहम्बीजा हि सा सिध्येत्तमोऽभावे कुतः फणी ॥३०॥

विवक्षितदृष्टान्तांशज्ञापनाय दृष्टान्तव्याख्या ।

तमोभिभूतचित्तो हि रज्ज्वां पश्यति रोषणम् ।
भ्रान्त्या भ्रान्त्या विना तस्मान्नोरगं स्रजि वीक्षते ॥३१॥

अनन्वयाच्च नात्मधर्मोऽहङ्कारः ।

आत्मनश्चेदहंधर्मो यायान्मुक्तिसुषुप्तयोः ।
यतो नान्वेति तेनायमन्यदीयो भवेदहम् ॥ ३२ ॥

---

अहं ब्रह्मेति सामानाधिकरण्यवाक्यस्याहम्प्रत्ययव्यपनेतृत्वं प्रश्नपूर्वकं दृष्टान्तेन प्रतिपादयति कथं वाक्यमित्यादिना । स्थाणुः पुरुष इति सामानाधिकरण्यं यथा स्थाणोर्बाधकं तथाहं ब्रह्मास्मीति सामानाधिकरण्यमहङ्कारस्य बाधकमित्यर्थः ॥ २९ ॥

इत्थमहङ्कारस्यात्मधर्मत्वनिराकरणे प्रयोजनमाह अहम्परिच्छेदेति । रज्ज्वज्ञानव्यावृत्तौ सर्पव्यावृत्तिवदहङ्कारव्यावृत्तौ ममकारव्यावृत्तिरित्यर्थः ॥ ३० ॥

तमोऽभावे कुतः फणीति प्रसिद्धान्धकारस्याभावे फणिनः सर्पस्याभावो दृष्टान्तत्वेनोपन्यस्त इति शङ्कानिरासाय दृष्टान्तो व्याख्यायत इत्याह विवक्षितेति । अज्ञानाभिभूतचित्तो हि भ्रान्त्या रज्ज्वां रोषणं सर्पं पश्यति तस्मात्तमसा विना स्रजि नोरगं वीक्षत इत्यर्थः ॥ ३१ ॥

सुषुप्त्यादावननुभवाच्चाहङ्कारस्यानात्मधर्मत्वमवगम्यत इत्याह अन-

आत्मधर्मत्वाभ्युपगमेऽपरिहार्यदोषप्रसक्तिश्च ।

यद्यात्मधर्मोऽहङ्कारो नित्यत्वं तस्य बोधवत् ।
नित्यत्वे मोक्षशास्त्राणां वैयर्थ्यं प्राप्नुयाद्ध्रुवम् ॥ ३३ ॥

स्यात्परिहारः स्वाभाविकधर्मत्वाभ्युपगमेऽप्याम्रादिफलवदिति चेत्तन्न ।

आम्रादेः परिणामित्वाद्गुणहानिर्गुणान्तरैः ।
अविकारि तु तद्ब्रह्म "न हि द्रष्टुरि"ति श्रुतेः ॥ ३४ ॥

अहङ्कारस्य चागमापायित्वात्तद्धर्मिणश्चानित्यत्वं प्राप्नोति ।

आगमापायिनिष्ठत्वादनित्यत्वमियादृशिः ।
उपयन्नपयन्धर्मो विकरोति हि धर्मिणम् ॥ ३५ ॥

---

न्वयाच्चेति । अहङ्कारो नात्मधर्मः । अयावदात्मभावित्वाद्देहवदित्यर्थः ॥ ३२ ॥

इतश्चाहङ्कारस्यानात्मधर्मत्वमित्याह आत्मधर्मत्वेति । अस्तु तर्हि नित्यत्वमपीत्यत आह नित्यत्व इति ॥ ३३ ॥

ननु यावद्द्रव्यभावित्वाभावेऽपि श्यामत्वादेर्धर्मत्वं दृश्यते तस्मादहङ्कारस्यानित्यत्वेऽपि नित्यात्मधर्मत्वमुपपद्यत इति शङ्कते स्यादिति । परिहरति तन्नेति । आम्रादिद्रव्यस्य परिणामित्वेन गुणान्तरोदयसम्भवात्तेन स्वाभाविकस्यापि गुणस्य नित्यनिवृत्तिः सम्भवति । ब्रह्मणस्तु कूटस्थत्वेन गुणान्तराभावात्तद्धर्मस्याहङ्कारस्य न निवृत्तिः सम्भवति । ततश्चात्मनो नित्यत्वात्तद्धर्मस्याहङ्कारस्यापि नित्यत्वमेवेति भावः ॥ ३४ ॥

पूर्वमहङ्कारस्यानित्यत्वान्नित्यात्मधर्मत्वमनुपपन्नमित्युक्तमिदानीमात्मनो नित्यत्वादनित्याहङ्कारधर्मित्वमयुक्तमित्याह अहङ्कारस्येति । आगमापायिनोऽहङ्कारस्य निष्ठास्थितिर्यस्मिन्नसावागमापायिनिष्ठस्तस्य भावस्तत्त्वं तस्मादित्यर्थः ॥ ३५ ॥

अस्त्वनित्यत्वं कमुपालभेमहि प्रमाणोपपन्नत्वादिति चे-
त्तन्न ।

सदाविलुप्तसाक्षित्वं स्वतःसिद्धं न पार्यते ।
अपह्नोतुं घटस्येव कुशाग्रीयधियात्मनः ॥ ३६ ॥

एतस्माच्च हेतोरहङ्कारस्यानात्मधर्मत्वमवसीयताम् ।

प्रमाणैश्चावगम्यत्वाद्घटादिवदहंदृशेः ।
यतो राद्धिः प्रमाणानां स कथं तैः प्रसिध्यति ॥ ३७ ॥

धर्मधर्मिणोश्चेतरेतरविरुद्धात्मकत्वादसङ्गतिः ।

धर्मिणश्च विरुद्धत्वान्न दृश्यगुणसङ्गतिः ।
मारुतान्दोलितज्वालं शैत्यं नाग्निं सिसृप्सति ॥ ३८ ॥

---

इदानीं सौगतमतमाशङ्कतेऽस्त्विवति । निरस्यति तन्नेति । सति देहे तावदात्मनः प्रत्यभिज्ञया स्थायित्वावगमादनित्यत्वे चाकृताभ्यागमकृतविप्रणाशादिदोषप्रसङ्गाज्जातिस्मरणादिदर्शनान्मुख्येऽर्थे बाधाभावात्प्रत्यभिज्ञायाः सादृश्यनिबन्धनत्वकल्पनानुपपत्तेश्च नित्यत्वमात्मनः स्वतःसिद्धं निह्नोतुं न शक्यत इत्यर्थः ॥ ३६ ॥

प्रमाणैश्चेति । अहमहङ्कारः प्रमेयत्वाद्दृशेरात्मनो घटादिवद्भवति यथा प्रमाणगम्यो घटकरकादिरात्मनो धर्मो न भवति तद्वदहङ्कारोऽप्यात्मनो धर्मो न भवतीत्यर्थः । नन्वात्मापि प्रमाणगम्य एवेत्यत आह यत इति । राद्धिः सिद्धिः । प्रमाणानां सिद्धेः प्रागेव सिद्धत्वेनात्मनोऽप्रमाणसाधकत्वान्न प्रमाणाधीना तत्सिद्धिरित्यर्थः ॥ ३७ ॥

पूर्वं दर्शनक्रियां प्रत्यात्मनः कर्तृत्वात्तत्कर्मत्वाच्चाहङ्कारस्य न तयोर्धर्मधर्मिभाव इत्युक्तम् । इदानीं तु चिदचिद्रूपत्वेन शीतोष्णवद्विरुद्धस्वभावत्वान्न तयोर्धर्मधर्मिभाव इत्याह धर्मधर्मिणोश्चेति । यथा शैत्यमग्नेर्धर्मो न भवति विरोधात्तद्वदहङ्कारोऽप्यात्मधर्मो न भवति विरोधादेवेत्यर्थः ॥ ३८ ॥

तस्माद्विस्रब्धमुपगम्यताम् ।

द्रष्टृत्वं दृश्यता चैव नैकस्मिन्नेकदा क्वचित् ।
दृश्यदृश्यो न च द्रष्टा द्रष्टृदर्शी दृशिर्न च ॥ ३९ ॥

सर्वसंव्यवहारलोपश्च प्राप्नोति । यस्मात् ।

द्रष्टापि यदि दृश्याया आत्मेयात्कर्मतां धियः ।
यौगपद्यमदृश्यत्वं वैयर्थ्यं चामुयाच्छ्रुतिः ॥ ४० ॥

कुतः । यस्मात् ।

नालुप्तदृष्टेर्दृश्यत्वं दृश्यत्वे द्रष्टृता कुतः ।
स्याच्चेदृगेकं निर्दृश्यं जगद्वा स्यादसाक्षिकम् ॥ ४१ ॥

---

उक्तयुक्तिबलाद्द्रष्टृत्वदृश्यत्वे व्यवस्थिताधिकरणे एवेत्युपसंहरति तस्मादिति । एवं च सत्येतदपि सिद्धमित्याह दृश्यदृश्य इति । स्वदृश्येन विज्ञानेन स्वयमात्मा दृश्यो न भवति दृशिश्च विज्ञानं स्वद्रष्टारमात्मानं न विषयीकरोतीति चैतद्वयं सिद्धं भवतीत्यर्थः । यद्वा । तस्य दृश्यत्वासम्भवादिति हेतुमाह दृश्यदृश्य इति । द्रष्टुर्हि दृश्यत्वं वदता स्वेन दृश्येन दर्शनेन वा वक्तव्यमन्यस्याभावात् । तत्र न तावत्स्वेन दृश्यत्वं सम्भवति स्वात्मनि क्रियाविरोधान्नापि दृश्येन दृश्यत्वं सम्भवति जडस्य चेतनविषयीकरणायोगात् । नापि दृशिना विज्ञानेन दृश्यत्वं सम्भवति तस्य विषयगोचरस्य विषयिगोचरत्वायोगात्ततश्च न द्रष्टुर्दृश्यत्वमित्यर्थः ॥ ३९ ॥

द्रष्टुर्दृश्यत्वे दृशेश्च द्रष्टृदर्शित्वे दोषमाह सर्वसंव्यवहारेति । यदि द्रष्टात्मा स्वदृश्याया धियः कर्मतामियात्तदा द्रष्टापि दृश्यत इति स्यात् । तथा च बुद्ध्यात्मनोरुभयोरपि युगपदेकैकस्यैव द्रष्टृत्वं दृश्यत्वं च स्यात्तथा च सति द्रष्टृत्वादेवोभयोरदृश्यत्वं दृश्यदृश्यत्वे चात्मनः कूटस्थद्रष्टात्मविषयायाः श्रुतेर्वैयर्थ्यं स्यादित्यर्थः ॥ ४० ॥

वैयर्थ्यमेवोपपादयितुमाह कुत इति । लुप्तदृष्टेर्घटादेरेव दृश्यत्वनि-

**उक्तयुक्तिं दृढीकर्तुमागमोदाहरणोपन्यासः ।**

**आर्त्तमन्यद्दृशेः सर्वं "नेति नेतीति"चासकृत् ।**
**वदन्ती निर्गुणं ब्रह्म कथं श्रुतिरुपेक्ष्यते ॥ ४२ ॥**
**"महाभूतान्यहङ्कार"इत्येतत्क्षेत्रमुच्यते ।**
**न दृशेर्द्वैतयोगोऽस्ति विश्वेश्वरमतादपि ॥ ४३ ॥**

**अधुना प्रकृतार्थोपसंहारः ।**

**एवमेतद्विरुग्ज्ञेयं मिथ्यासिद्धमनात्मकम् ।**
**मोहमूलं सुदुर्बोधं द्वैतं युक्तिभिरात्मनः ॥ ४४ ॥**

---

यस्मादात्मनोऽपि दृश्यत्वे दृष्टिलोपः स्यात् । तथा च "न हि द्रष्टुर्दृष्टेरि"-त्यादिश्रुतेर्वैयर्थ्यं प्रसज्येतेत्यर्थः । ननु जानन्तं मां जानामीत्यनुभवाद्द्रष्टुरपि दृश्यत्वं दृश्यस्य च द्रष्टृत्वमित्याशङ्क्याह स्याच्चेद्दृगेकमिति । तथा सति दृश्यस्य द्रष्टृत्वाविरोधाद्द्रष्टृस्वभावतापत्तौ सर्वं द्रष्टृरूपमेवासीदिति दृश्यशून्यो द्रष्टैवावशिष्येत तथा चेद्द्रष्टुरपि दृश्यताविरोधाद्दृश्यस्वभावतापत्तौ सर्वं दृश्यमेवासीदिति द्रष्टृशून्यं जगदेवावशिष्येतेत्यर्थः ॥ ४१ ॥

उक्तन्यायस्य प्रशिथिलमूलत्वपरिहाराय मूलप्रमाणं दर्शयति उक्तयुक्तिमिति । उदाह्रियत इत्युदाहरणं वाक्यं तदुपन्यास इत्यर्थः । आर्त्तमन्यदिति । "नान्योऽतोऽस्ति द्रष्टे"त्युपक्रम्य"अतोऽन्यदार्त्तमिति" द्रष्ट्रात्मव्यतिरिक्तस्य सर्वस्य दृश्यजातस्य विनाशित्वेन नित्यात्मधर्मत्वानिराकरणान्नेति नेतीति मूर्त्तामूर्त्तद्वयनिषेधाच्च सर्वदृश्यासंस्पर्शित्वमात्मनः प्रदर्शयन्ती श्रुतिर्नोपेक्ष्येत्यर्थः ॥ ४२ ॥

उक्तेऽर्थे स्मृतिरपि प्रमाणमाह महाभूतानीति । महाभूतादिधृत्यन्तं सर्वं क्षेत्रमेवेति भगवताप्युक्तत्वादात्मा समस्तप्रपञ्चशून्य इत्यवगम्यत इत्यर्थः ॥ ४३ ॥

एवं श्रुतिस्मृतिमूलयुक्तिसद्भावादहङ्कारादिः सर्वोऽपि द्वैतप्रपञ्च आत्मनः सकाशाद्विलक्षण इत्युपसंहरतीत्याह अधुना प्रकृतार्थेति । हि-

**कुतो मिथ्यासिद्धत्वं द्वैतस्येति चेत्।**

**न पृथङ्नात्मना सिद्धिरात्मनोऽन्यस्य वस्तुनः।**
**आत्मवत्कल्पितस्तस्मादहङ्कारादिरात्मनि ॥ ४५**

**तस्मादज्ञानविजृम्भितमेतत्।**

**दृश्याः शब्दादयः कॢप्ता द्रष्टृ च ब्रह्म निर्गुणम्।**
**अहं तदुभयं बिभ्रद्भ्रान्तिमात्मनि यच्छति ॥ ४६ ॥**

**तत एवेयमभिन्नस्यात्मनो भेदबुद्धिः।**

**दृगेका सर्वभूतेषु भाति दृश्यैरनेकवत्।**
**जलभाजनभेदेन मयूखस्रग्विभेदवत् ॥ ४७ ॥**

---

रुक्पृथगित्यर्थः। नन्वात्मनः पृथक्त्वेऽपि द्वैतं साङ्ख्यानामिव पारमार्थिकं स्यादित्यत आह मिथ्यासिद्धमिति। तथाप्यन्यथाख्यातिप्रभृतीनामिव मिथ्यात्वं स्यादित्यत आह अनात्मकमिति। अनात्मकं सत्स्वभावरहितमित्यर्थः। सत्यात्मकार्यस्य कथमेवंविधत्वमित्यतआह मोहमूलमिति। तदेव कथमित्यत आह सुदुर्बोधमिति। प्रमाणयुक्तिभ्यां दुर्निरूपमित्यर्थः ॥ ४४ ॥

एतदेवोत्तरश्लोकेनोपपाद्यत इत्याह कुतो मिथ्यासिद्धत्वमिति। न पृथगिति। सद्रूपाज्ज्ञानस्वभावादात्मनोऽनन्यत्वादेव न पृथक्सत्ताप्रतीती जडस्य सम्भवतः। नापि प्रत्यगात्माभेदेन प्रत्यगात्मवत्सिद्धिर्जडाजडयोरभेदायोगात्। तस्मादहङ्कारादिरात्मनि कल्पित इत्यर्थः ॥ ४५ ॥

फलितमाह तस्मादिति। दृश्यत्वेन द्रष्टृत्वेन सत्यत्वेनानृतत्वेनात्यन्तविविक्तयोरात्मानात्मनोर्वस्तुतः सम्भेदाभावेऽप्यहङ्कारोपाधौ द्वयोः प्रतिबिम्बितत्वाद्दर्पणतले प्रतिबिम्बितयोर्लोहितमुखयोर्लोहितं मुखमिति परस्परसम्भेदाध्यासवद्भ्रान्त्यैव कर्तृत्वादिसम्बन्धप्रतिभास इत्यर्थः ॥ ४६ ॥

न केवलमनात्मसम्बन्ध एवाहंनिबन्धनः प्रतिदेहमात्मनो भेदोऽपि तन्निबन्धन एवेत्याह तत एवेयमिति। मयूखस्रग्वी रश्मिमाली ॥ ४७ ॥

**यथोक्तार्थस्य प्रतिपत्तये दृष्टान्तः ।**

**मित्रोदासीनशत्रुत्वं यथैकस्यान्यकल्पनात् ।**
**अभिन्नस्य चितेस्तद्वद्भेदोऽन्तःकरणाश्रयः ॥ ४८ ॥**
**अपहारो यथा भानोः सर्वतो जलपात्रकैः ।**
**तत्क्रियाकृतिदेशाप्तिस्तथा बुद्धिभिरात्मनः ॥ ४९ ॥**

**न च विरुद्धधर्माणामेकत्रानुपपत्तिः । किंकारणम् ।**

**कल्पितानामवस्तुत्वात्स्यादेकत्रापि सम्भवः ।**
**कमनीयाऽशुचिः स्वाद्वीत्येकस्यामिव योषिति॥ ५०॥**

---

अन्तःकरणोपाधिनिबन्धनो भेद इत्यत्र दृष्टान्तान्तरमाह यथोक्तार्थेति । यथैकस्यैव देवदत्तस्य पुरुषान्तरकल्पनावशान्मित्रोदासीनशत्रुत्वमेवमभिन्नस्यापि चैतन्यस्य बुद्ध्युपाधिनिबन्धनो भेदो न स्वतो नापि परत इत्यर्थः । चितेरित्यर्थविवक्षया धातुनिर्देशस्ततश्चाभिन्नस्य चितेरिति पुल्लिङ्गसमभिव्याहार उपपद्यते ॥ ४८ ॥

ननु स्वमहिमप्रतिष्ठस्य पूर्णस्य चैतन्यस्य सर्वान्तःकरणप्रतिबिम्बितत्वं तद्धर्मवत्त्वं चायुक्तमित्याशङ्क्याह अपहार इति । यथा खदेशस्थस्यैवादित्यस्य जलपात्रेण स्वगतत्वेनापहारस्तत्क्रियादिश्च भवति तद्वत्स्वमहिमप्रतिष्ठस्यापि चैतन्यस्यान्तःकरणप्रतिबिम्बितत्वम् । तत्क्रिया तद्गतध्यानादिक्रिया । तदाकृतिः स्वच्छत्वपरिच्छिन्नत्वादि । तद्देशेन हृदयप्रदेशेन च सम्बन्धश्च सम्भवतीत्यर्थः ॥ ४९ ॥

ननु सर्वभूतेष्वेक एव चेदात्मा तर्हि तस्य युगपदेव परस्परविरुद्धसुखदुःखरागद्वेषभ्रान्तिसम्यग्ज्ञानाद्याश्रयत्वं प्रसज्येत तच्चानुपपन्नं तत्कथमुक्तं "दृगेका सर्वभूतेष्विति" । तत्राह न च विरुद्धेति । विरुद्धधर्माणामप्यविद्यापरिकल्पितत्वादेकस्मिन्धर्मिणि समावेशो नानुपपन्नः । यथैकस्मिन्नपि स्त्रीदेहे वस्तुभेदमन्तरेणापि वासनावशात्कामुकपरिव्राजकशुनां कमनीयाशुचिस्वाद्वितिविरुद्धधर्मपरिकल्पना तद्वदित्यर्थः ॥ ५० ॥

**न चायं क्रियाकारकफलात्मक आभास ईषदपि परमार्थवस्तु स्पृशति तस्य मोहमात्रोपादानत्वात् ।**

**अभूताभिनिवेशेन स्वात्मानं वञ्चयत्ययम् ।**
**असत्यपि द्वितीयेऽर्थे सोमशर्मपिता यथा ॥ ५१ ॥**

**वस्तुयाथात्म्यानवबोधपटलावनद्धाक्षः सन् ।**

**सुभ्रूः सुनासा सुमुखी सुनेत्रा चारुहासिनी ।**
**कल्पनामात्रसम्मोहाद्रामेत्यालिङ्गतेऽशुचिम् ॥ ५२ ॥**

---

विरुद्धधर्माणामात्मनि सम्भवे तस्यासङ्गत्वव्याघात इत्यत आह न चायमिति । अनिर्वचनीयाज्ञानपरिकल्पितद्वैतप्रपञ्चसम्बन्धेनात्मनोऽसङ्गत्वं न व्याहन्यते वस्तुतस्तत्स्पर्शाभावात् । न ह्यविद्यापरिकल्पितनीलिमगुणेन गगनं नीलीक्रियते ततश्च नासङ्गत्वव्याघात इत्यर्थः । अभूताभिनिवेशेनेति । असत्यपि द्वैतप्रपञ्चे मिथ्याभिनिवेशेनैवाहं सुखी दुःखीति स्वमात्मानमयं लोको वञ्चयतीत्यर्थः । तत्र दृष्टान्तः सोमशर्मपितेति । कश्चिदतिदरिद्रो ब्रह्मचारी बह्वाशी भिक्षमाणः कदाचिद्दुर्भिक्षकाले सक्तुमुष्टिं बध्वा निर्वेदात्कस्मिंश्चित्पर्वते वृक्षच्छायायां शयान एवं मनोरथयति स्म । सक्तुमुष्टिबन्धनं मुक्त्वा तेन काश्चन गाः क्रीत्वा वर्धयिष्यामि । ताश्च पञ्चषड्वत्सरादनेकानडुहः प्रसविष्यन्ति ततो यथेष्टं कर्षयिष्यामि । ततो धनधान्यादिसमग्रं भविष्यति । ततो दासीदासादिबहुलं गृहं संपादयिष्यामि । ईदृशीं संपदं दृष्ट्वा योग्यतमः कश्चित्स्वकन्यां मह्यं प्रदास्यति पश्चाद्यथाविधानं गार्हस्थ्यमनुभविष्यामि । ततो वंशकरं पुत्रमुत्पाद्य सोमशर्मेति नाम कृत्वा पश्चात्कुटुम्बसौख्यानुभवसमये रुदन्तं मातरमनुगतं सोमशर्माणं स्वकार्यपारवश्यात्तमनादृत्य गच्छन्तीं स्वां भार्यां दृष्ट्वा पुत्रनिमित्तकोपेन स्वां भार्यामताडयत् । ततो भिक्षापात्रं करघाताद्विधापतत्सक्तवश्च वायुवेगादपासरन् । पश्चादहो कष्टं नष्टोऽस्मि मन्दभाग्योऽहं सक्तवश्च ममापगच्छन्किं करिष्यामीति प्रबुद्धः सन्पिता व्यलपत् । तत्तदेतद्दृष्टान्तत्वेनोदाहरतीत्यर्थः ॥ ५१ ॥

कल्पनाया अयथावस्तुव्यवहारहेतुत्वे दृष्टान्तान्तरमाह वस्तुया-

सर्वस्यानर्थजातस्य जिहासितस्य मूलमहङ्कार एव तस्यात्मानात्मोपरागात् । न तु परमार्थत आत्मनोऽविद्यया तत्कार्येण वा सम्बन्धोऽभूदस्ति भविष्यति वा तस्यापरिलुप्तदृष्टिस्वाभाव्यात् ।

दृश्यानुरक्तं तद्द्रष्टृ दृश्यं द्रष्टृनुरञ्जितम् ।
अहंवृत्त्योभयं रक्तं तन्नाशेऽद्वैतताऽऽत्मनः ॥ ५३ ॥

इह केचिच्चोदयन्ति योऽयमन्वयव्यतिरेकाभ्यामनात्मतयोत्सारितोऽहङ्कारो वाक्यार्थप्रतिपत्तये सोऽयं विपरीतार्थः संवृत्तो यस्मादहंब्रह्मास्मीति ब्रह्माहम्पदार्थयोः

---

थात्म्येति ॥ ५२ ॥

यदुक्तं "अहं तदुभयं विभ्रद्भ्रान्तिमात्मनि यच्छतीति" तत्प्रपञ्चयितुमाह सर्वस्येति । आत्मनः कूटस्थनिर्विभागचैतन्यमात्रशरीरस्य द्वैतानर्थसम्बन्धहेतुरविद्यानिर्मितशरीरोऽहङ्कार एव कुतस्तस्याहङ्कारस्य द्वैतेनानर्थेनात्मना चोपरक्तत्वेन द्वैतस्यात्मनि प्रापकत्वादित्यर्थः । नन्वहङ्कारव्यतिरेकेणैवात्मनः सर्वैरपि सम्बन्धसम्भवादनर्थः स्यादित्याशङ्क्य जानाम्यनुभवामीत्यनर्थरूपसम्बन्धः कालत्रयेऽप्यहङ्कारव्यतिरिक्ताधिष्ठानचैतन्ये न सम्भवतीत्याह न तु परमार्थत इति । दृश्यानुरक्तमिति । दृश्यैः शब्दादिभिरनुरक्तं सम्बद्धमन्तःकरणं स्वात्मनि प्रतिबिम्बितचैतन्याभासात्तेषां द्रष्टृ भवति तदेव च द्रष्ट्रात्मचैतन्यानुरञ्जितं सत्तस्य चैतन्यस्य दृश्यमवभास्यमिव भवति तदेवमुक्तन्यायेनाहंवृत्त्योभयमपि द्रष्टृ दृश्यं चेत्येतदनुरक्तमहमिदं जानामीति तेनात्यन्तविविक्तयोर्द्रष्टृदृश्ययोः सम्बन्धहेतुरहङ्कार एवेति तन्निवृत्तावात्मनोऽद्वैतत्वं युक्तमित्यर्थः ॥ ५३ ॥

ननु तत्त्वमस्यादिवाक्यार्थप्रतिपत्त्यर्थं त्वंपदार्थशोधनत्वेनाहङ्कारस्यानात्मत्वमुक्तं तदयुक्तं तस्यानात्मत्वेऽहं ब्रह्मास्मीति श्रूयमाणसामानाधिकरण्यानुपपत्तिप्रसङ्गादिति शङ्कत इह केचिदिति । ननु न सामाना-

सामानाधिकरण्यश्रवणादनात्मार्थेन सामानाधिकरण्यं प्राप्नोति वक्तव्या च प्रत्यगात्मनि तस्य वृत्तिरिति सोऽच्यते प्रसिद्धलक्षणागुणवृत्तिभिः ।

नाज्ञासिषमिति प्राह सुषुप्तादुत्थितोऽपि हि ।
अयोदाहादिवत्तेन लक्षणं परमात्मनः ॥ ५४ ॥

प्रत्यक्त्वादतिसूक्ष्मत्वादात्मदृष्ट्यनुशीलनात् ।
अतो वृत्तीर्विहायान्या ह्यहंवृत्त्योपलक्ष्यते ॥ ५५ ॥

---

धिकरण्यश्रवणानुपपत्तिरहंशब्दस्य प्रत्यगात्मवाचित्वोपपत्तेरित्याशङ्क्य तर्हि तस्य तत्र वृत्तिप्रकारो वाच्य इत्याह वक्तव्या चेति । तत्र तावदहंशब्दस्य प्रत्यगात्मनि प्रसिद्धया मुख्यया वृत्त्या लक्षणया वृत्त्या गुणवृत्त्या च या वृत्तिस्तां दर्शयन्परिहरति सोच्यत इत्यादिना । तत्र लक्षणावृत्तिं तावद्दर्शयति नाज्ञासिषमिति । सुषुप्त्यवस्थायामहङ्काराभावेऽपि नाहमज्ञासिषमिति केवलात्मन्यहंशब्दस्य प्रयोगदर्शनादहं ब्रह्मासीत्यत्राप्यहङ्कारसद्भावेऽप्यहंशब्दस्य मुख्यार्थपरिग्रहे प्रमाणान्तरविरोधात्तत्सम्बद्धार्थान्तरे प्रत्यगात्मनि जहल्लक्षणावृत्त्या वृत्तिराश्रीयते । यथायो दहतीत्यत्रायःशब्दस्य मुख्यार्थपरिग्रहे दग्धृत्वप्रतीतिविरोधान्मुख्यार्थपरित्यागेन मुख्यार्थसम्बद्धार्थान्तरे च वह्नौ जहल्लक्षणया वृत्तिराश्रीयते तद्वदित्यर्थः ॥ ५४ ॥

इदानीमहंशब्दस्यात्मनि गुणवृत्तिमाह प्रत्यक्त्वादिति । स्वव्यतिरिक्तसकलानात्मापेक्षयान्तरत्वाद्द्रव्यत्वे सति स्पर्शादिरहितत्त्वेन सूक्ष्मत्वादन्नमयकोशमारभ्यात्मदृष्ट्यनुशीलनाच्चाहङ्कारगुणानामात्मनि विद्यमानत्वाद्घटादिविषयवृत्तीर्विहायाहंवृत्त्या तच्छब्देन चोपलक्ष्यत इत्यर्थः । यद्वा । आत्मदृष्ट्यनुशीलनादात्मनः स्वरूपभूतया दृष्ट्यानुशीलनात्तदाभासोदयेन निरन्तरं सम्बन्धादित्यर्थः ॥ ५५ ॥

आत्मना चाविनाभावमथवा विलयं व्रजेत् ।
न तु पक्षान्तरं यायादतश्चाहंधियोच्यते ॥ ५६ ॥

कीदृक्पुनर्वस्तु लक्ष्यम् ।

नामादिभ्यः परो भूमा निष्कलोऽकारकोऽक्रियः ।
स एवात्मवतामात्मा स्वतःसिद्धः स एव नः ॥ ५७ ॥

अज्ञानोत्थबुद्ध्यादिकर्तृत्वोपाधिमात्मानं परिगृह्यैवान्वयव्यतिरेकाभ्यामहं सुखी दुःखी चेत्यहङ्कारादेरनात्मधर्मत्वमुक्तं केवलात्माभ्युपगमेऽशक्यत्वात्फलाभावाच्च । अथेदानीमविद्यापरिकल्पितं साक्षित्वमाश्रित्य कर्तृत्वाद्यशेषपरिणामप्रतिषेधायाह ।

---

इदानीमन्तःकरणविशिष्टेऽहंशब्दस्य मुख्यवृत्त्यापि वृत्तिरस्तीत्याह आत्मना चेति । अहङ्कारो हि स्वस्थितावात्मना चाविनाभावं प्राप्नुयादन्यथा तस्य नाश एव न पुनः पक्षान्तरमस्ति न पुनर्विद्यमानस्यैवात्मव्यतिरेकेण क्षणमप्यवस्थानमस्ति तथा चाहंशब्देनात्मोच्यत इत्यर्थः । अहंधियाहंधीहेतुनाहंशब्देनेति यावत् ॥ ५६ ॥

एवमहंशब्दवाच्यत्वं दर्शितमिदानीं प्रश्नपूर्वकं लक्ष्यं दर्शयति कीदृगिति । नामादिभ्यः प्राणान्तेभ्यः परोऽन्यो यत्र नान्यत्पश्यतीत्यारभ्य स भूमेत्युक्तलक्षणोऽत एव क्रियाकारकतत्साध्यफलशून्यः सर्वेषामात्मवतामात्मा स एव लक्ष्य इत्यर्थः । ननु प्रमाणान्तरसिद्धस्य लक्ष्यत्वाद्ब्रह्मणः प्रमाणान्तरसिद्ध्यभावात्कथं लक्ष्यत्वमित्याशङ्क्य लक्ष्यत्वे शब्दव्यतिरेकेणैव सिद्धत्वं प्रयोजकं न तु प्रमाणान्तरसिद्धत्वं । तच्चास्माकमस्तीत्याह स्वतःसिद्ध इति ॥ ५७ ॥

पूर्वं द्रष्ट्रन्वयदृश्यव्यतिरेकयोः प्रदर्शनेनाहङ्कारादेरनात्मत्वमुक्तमिदानीं साक्ष्यन्वयसाक्ष्यव्यतिरेकयोः प्रदर्शनेन द्रष्टृत्वादिव्यतिरेकः प्रदर्श्यत इत्याह अज्ञानोत्थेति । अज्ञानोत्थबुद्ध्यादिलक्षणः कर्तृत्वोपाधिर्यस्य तं

एष सर्वधियां नृत्तमविलुप्तैकदर्शनः ।
वीक्षतेऽवीक्षमाणोऽपि निमिषत्तद्ध्रुवोऽध्रुवम् ॥ ५८ ॥

ननु सर्वसिद्धान्तानामपि स्वस्वदृष्ट्यपेक्षयोपपन्नत्वादितरेतरदृष्ट्यपेक्षया च दुःस्थितसिद्धिकत्वान्नैकत्रापि विश्वासं पश्यामो न च सर्वतार्किकैरदूषितमसमर्थितं चातो न सर्वतार्किकोपद्रवापसर्पणाय वर्त्म सम्भावयामः । उच्यते । विस्रब्धैः सम्भाव्यतामनुभवमात्रशरणत्वात्सर्वतार्किकप्रस्थानानां तदभिधीयते ।

इमं प्राश्निकमुद्दिश्य तर्कज्वरभृशातुराः ।
त्वाच्छिरस्कवचोजालैर्मोहयन्तीतरेतरम् ॥ ५९ ॥

---

द्रष्टारमात्मानमादायेत्यर्थः । किमित्यविद्याध्यारोपितं रूपमङ्गीकृतमित्यत आह केवलेति । शुद्धचैतन्यस्यान्वयव्यतिरेकव्यवहारायोग्यत्वाद्व्यवहारसाध्यफलाभावाच्चेत्यर्थः । अथेदानीमिति । परिणामिबुद्ध्युपाधिप्रयुक्तद्रष्ट्रन्वयव्यतिरेकेणानाद्यविद्योपाधिप्रयुक्तं साक्षित्वमाश्रित्य कर्तृत्वादिप्रतिषेधः क्रियत इत्यर्थः । एष सर्वधियां नृत्तमिति । एवमात्माविलुप्तैकदर्शनोऽपरिणाम्यद्वयचित्स्वभावः सर्वासां धियां नृत्तं निमिषज्जडं वीक्षते तथा स्वयं ध्रुवोऽध्रुवं वीक्षत इत्यर्थः । वीक्षत इत्युक्तत्वात्परिणामित्वप्रसक्तावाह अवीक्षमाणोऽपीति । कर्तृत्वशून्य एव स्वात्मोपरक्तं स्वरूपेणैवादित्यवदवभासयतीत्यर्थः ॥ ५८ ॥

उत्तरश्लोकव्यावर्त्यामाशङ्कामाह ननु सर्वेति । सर्वेषां सिद्धान्तानामन्योन्यपराहतत्वान्न कुत्रापि विश्वासः कर्तुं शक्यत इत्यर्थः । ननु सर्ववादिनां कुत्रचित्संप्रतिपत्तिसम्भवात्तत्र विश्वासोऽस्त्वित्यत आह न चेति । श्लोकमवतारयन्परिहरति उच्यत इति । अनुभवस्तावत्सर्ववादिसंप्रतिपन्नस्तत्र न कस्यापि विप्रतिपत्तिः स चास्माकमात्मा तत्र सर्वैर्विश्वासः कर्तव्यः सर्वैरभ्युपगतत्वादित्यर्थः । इममिति । अनुभवमेव

अत्रापि चोदयन्ति। अनुभवात्मनोऽपि विक्रियाभ्युपगमेऽनभ्युपगमेऽपि दोष एव यस्मादाह।

वर्षातपाभ्यां किं व्योम्नश्चर्मण्येव तयोः फलम्।
चर्मोपमश्चेत्सोऽनित्यः खतुल्यश्चेदसत्समः॥ ६०॥

बुद्धिजन्मनि पुंसश्च विकृतिर्यद्यनित्यता।
अथाविकृतिरेवायं प्रमातेति न युज्यते॥ ६१॥

अस्य परिहारः।

ऊर्ध्वं गच्छति धूमे खं भिद्यते स्विन्न भिद्यते।
न भिद्यते चेत्स्यास्तुत्वं भिद्यते चेद्भिदास्य का॥६२॥

---

प्राश्निकं गुणदोषसाक्षिणं मध्यस्थमुद्दिश्य सर्वे वादिनोऽमुकत्वादमुकत्वादिति हेतुजालैरितरेतरं मोहयन्ति तस्मात्तस्मिन्प्राश्निके नाविश्वास इत्यर्थः॥ ५९॥

अनुभवरूपेऽप्यात्मनि विवादं दर्शयञ्शङ्कतेऽत्रापीति। विकारहेतौ सत्यपि विकार्यस्यैव चर्मणो विकारो दृश्यते न त्वविकार्यस्य व्योम्नस्तथा च सति भवदभिमत आत्मापि चर्मवद्विकार्यो नभोवदविकार्यो वोभयथापि दोष एवेत्याह वर्षातपाभ्यामिति। असत्समः। अप्रमातृत्वप्रसङ्ग इत्यर्थः॥ ६०॥

एतदेव स्पष्टयति बुद्धिजन्मनीति। घटादिविषयज्ञानोत्पत्तौ यद्यात्मा विक्रियते तर्ह्यनित्यत्वं स्यान्न विक्रियते चेत्प्रमातृत्वाभाव इत्यर्थः॥६१॥

प्रतिबन्दीन्यायेनाक्षेपं परिहरति अस्य परिहार इति। धूम ऊर्ध्वं गच्छति सति खमाकाशमवकाशदानाय भिद्यते विदीर्णं भवति वा न वा। न भवति चेद्धूमस्य स्यास्तुत्वं नोर्ध्वगतिः स्याद्भवति चेत्कास्य भिदा न काचिद्विभागलक्षणा क्रिया समवायित्वाभावात्। ततश्च भेदादिविकारमन्तरेणैवाकाशमवकाशस्वरूपेणैव दृश्यत इत्यर्थः॥ ६२॥

इत्येतत्प्रतिपत्त्यर्थमाह ।

अविक्रियस्य भोक्तृत्वं स्यादहंबुद्धिविभ्रमात् ।
नौयानविभ्रमाद्यद्वन्नगेषु गतिकल्पनम् ॥ ६३ ॥

यथोक्तार्थाविष्करणाय दृष्टान्तान्तरोपादानम् ।

यथा जात्यमणेः शुभ्रा ज्वलन्ती निश्चला शिखा ।
सन्निध्यसन्निधानेषु घटादीनामविक्रिया ॥ ६४ ॥

अयमत्रांशो विवक्षित इति ज्ञापनायाह ।

यदवस्था व्यनक्तीति तदवस्थैव सा पुनः ।
भण्यते न व्यनक्तीति घटादीनामसन्निधौ ॥ ६५ ॥

---

एतावता किमुक्तं भवतीत्यत आह इत्येतदिति । अहंबुद्धिरहंप्रत्ययस्तन्निमित्तो विभ्रमोऽहंबुद्धिविभ्रमस्तस्मात्सुखदुःखादिपरिणामित्वेन भोक्रन्तःकरणेनाभेदाध्यासादहं भोक्तेति विभ्रमो भवेत् । यथा नौयाननिमित्तो विभ्रमो नौयानविभ्रमस्तस्मात्तीरस्थेषु नगेषु गमनरहितेषु गच्छन्ति वृक्षा इत्यध्यवसायस्तद्वदित्यर्थः ॥ ६३ ॥

कूटस्थरूपेणैव परमात्माहङ्कारादिद्वैतप्रपञ्चमवभासयति न विकारमापद्यत इत्यत्र विभ्रमदृष्टान्तव्यतिरेकेण वास्तवदृष्टान्तोऽप्यस्तीत्याह यथोक्तार्थेति । जातौ भवो जात्यस्तस्य मणेः शिखा प्रकाश्यघटादिसन्निधावसन्निधावप्यविक्रिया विकारशून्या तद्वदात्मापीत्यर्थः ॥ ६४ ॥

ननु तत्र शिखायाः स्वरूपेणाविक्रियत्वमसंप्रतिपन्नमित्याशङ्क्य तद्दर्शयति अयमत्रेति । अयमत्र दृष्टान्ते दार्ष्टान्तिकोपयोगी विवक्षितोंऽश इति प्रतिज्ञापनायेत्यर्थः । यदवस्थेति । यदवस्थावती शिखा व्यनक्तीति भण्यते तदवस्थावत्येव न व्यनक्तीत्यपि भण्यते घटाद्यसन्निधानात्ततश्च प्रकाश्यसन्निध्यसन्निधिभ्यां व्यनक्ति न व्यनक्तीति व्यपदेशो न तु विकारतदभावाभ्याम् । तस्मात्स्वरूपेणाविक्रियत्वं सिद्धमित्यर्थः ॥ ६५ ॥

तत्र च ।

सर्वधीव्यञ्जकस्तद्वत्परमात्मा प्रदीपकः ।
सन्निध्यसन्निधानेषु धीवृत्तीनामविक्रियः ॥ ६६ ॥
न प्रकाशक्रिया काचिदस्य स्वात्मनि विद्यते ।
उपचाराक्रिया सास्य यः प्रकाश्यस्य सन्निधिः ॥ ६७ ॥

मैवं शंकिष्ठाः सांख्यराद्धान्तोऽयमिति । यतः ।

यथा विशुद्ध आकाशे सहसैवाभ्रमण्डलम् ।
भूत्वा विलीयते तद्वदात्मनीहाखिलं जगत् ॥ ६८ ॥

तस्मादेष कूटस्थो न द्वैतं मनागपि स्पृशति । यतः ।

---

दृष्टान्तगतमर्थं दार्ष्टान्तिके समर्पयति तत्र चेति । परमात्मा प्रकाशोऽपि तद्वद्धीवृत्तीनां सन्निध्यसन्निधाने निर्विकार एव सर्वधीव्यञ्जको न व्यङ्ग्य इति चोच्यत इत्यर्थः ॥ ६६ ॥

एतदेव प्रपञ्चयति न प्रकाशेति । ननु प्रकाशक्रियाभावे धीवृत्तीः प्रकाशयतीति कर्त्तृत्वव्यपदेशो न स्यादित्याशङ्क्य जन्यक्रियाभावेऽप्यादित्यादीनामिव प्रकाश्यसन्निध्युपाधिकः प्रकाशयतीति कर्त्तृत्वव्यपदेश उपचाराद्भवतीत्याह उपचारादिति ॥ ६७ ॥

नन्वनात्मैव संसरति नात्मा । आत्मा तु कूटस्थविज्ञानधातुः समस्तबुद्धिवृत्तिसाक्षी सकलसंसारधर्मातीत इति सांख्यसिद्धान्तोऽयं भवता सिद्धान्तत्वेन स्वीकृत इत्याशङ्क्य ततो वैषम्यं दर्शयितुमाह मैवमिति । यथा विशुद्ध इति । अस्य द्वैतेन्द्रजालस्यात्माज्ञाननिर्वृत्तत्वादात्ममात्रं जगदिति वेदान्तसिद्धान्तः । न चैवमभ्युपगम्यते सांख्यैरन्यदेव किंचिदचेतनं त्रिगुणं प्रधानं तदेव जगतः कारणं तच्च स्वतन्त्रं प्रपञ्चश्च पारमार्थिक इति सांख्याभ्युपगमात्ततो महदस्ति वैषम्यमित्यर्थः ॥ ६८ ॥

भूत्वा विलीयत इत्युक्तत्वात्प्राग्विलयादात्मसंस्पर्शोऽभ्युपगम्यत इति शङ्कां परिहर्त्तुमाह तस्मादेष इति । कुतो न स्पृशतीत्याशङ्क्य श्लोकेन हे-

शब्दाद्याकारनिर्भासाः क्षणप्रध्वंसिनीर्दृशा ।
नित्योऽक्रमदृगात्मैको व्याप्नोतीव धियोऽनिशम्॥६९॥

एवं च सति बुद्धेः परिणामित्वं युक्तम् ।

अतीतानागतेहत्यान्युगपत्सर्वगोचरान् ।
वेत्त्यात्मवन्न धीर्यस्मात्तेनेयं परिणामिनी ॥ ७० ॥

ततश्चैतत्सिद्धम् ।

अपश्यन्पश्यतीं बुद्धिमशृण्वन् शृण्वतीं तथा ।
निर्यत्नोऽविक्रियोऽनिच्छन्निच्छन्तीं व्याप्यलुप्तदृक्७१
द्विषन्तीमद्विषन्नात्मा कुप्यन्तीं चाप्यकोपनः ।
निर्दुःखो दुःखिनीं चैव निःसुखः सुखिनीमपि॥७२॥
अमुह्यमानो मुह्यन्तीं कल्पयन्तीमकल्पयन् ।
स्मरन्तीमस्मरंश्चैव शयानामस्वपन्मुहुः ॥ ७३ ॥

---

तुमाह यत इति । एवंविशिष्टा बुद्धिवृत्तीर्नित्योऽक्रमदृक्परमात्मैक एव दृशा स्वरूपचैतन्येन व्याप्नोतीव यस्मात्तस्मादयमात्मा समस्तद्वैतसंस्पर्शरहित इत्यर्थः ॥ ६९ ॥

कस्तर्हि घटादिज्ञानाकारेण परिणमत इत्यत आह एवं चेति । आत्मनः समस्तद्वैतासंस्पर्शित्वे सति बुद्धेः परिणामित्वं युक्तमित्यर्थः । बुद्धेः परिणामित्वे हेतुमाह अतीतानागतेहत्यानिति । अतीताश्चानागताश्चेहत्याश्चातीतानागतेहत्यास्तान् । सर्वे च ते गोचराश्चेति सर्वगोचरास्तान् । बुद्धिरात्मवद्युगपद्यस्मान्न वेत्ति तस्मात्क्रमद्रष्टृत्वादियं च परिणामिनीति क्रमवत्कतिपयसिद्धकार्यदर्शनान्यथानुपपत्त्या क्रमवत्कतिपयपरिणामः कल्प्यत इत्यर्थः ॥ ७० ॥

आत्मनः पुनर्दर्शनश्रवणादिविक्रियारहितस्य दर्शनश्रवणादिविक्रियावदशेषबुद्धिसाक्षित्वमपि सिद्धमित्याह ततश्चेत्यारभ्य श्लोकपञ्चकेन अपश्यन्निति ॥ ७१ ॥

समक्षपरोक्षयोर्विषयभेदात्कोपद्वेषयोर्विशेषो द्रष्टव्यः ॥ ७२ ॥ ७३ ॥

सर्वाकारां निराकारः स्वार्थोऽस्वार्थां निरिङ्गनः ।
निस्त्रिकालस्त्रिकालस्थां कूटस्थः क्षणभङ्गुराम् ॥७४॥
निरपेक्षश्च सापेक्षां पराचीं प्रत्यगद्वयः ।
सावधिं निर्गतेयत्तः सर्वदेहेषु पश्यति ॥ ७५ ॥

एतस्माच्च कारणादयमर्थो व्यवसीयताम् ।

दुःखी यदि भवेदात्मा कः साक्षी दुःखिनो भवेत्
दुःखिनः साक्षितायुक्ता साक्षिणो दुखिता तथा ॥७६॥

पूर्वस्यैव व्याख्यानार्थमाह ।

नर्ते स्याद्विक्रियां दुःखी साक्षिता का विकारिणः ।
धीविक्रियासहस्राणां साक्ष्यतोऽहमविक्रियः ॥ ७७ ॥

एवं सर्वस्मिन् व्यभिचारिण्यात्मवस्त्वेवाव्यभिचारीत्यनुभवतो व्यवस्थापनायाह ।

प्रमाणतन्निभेष्वस्या नोच्छित्तिर्मम संविदः ।
मत्तोऽन्यद्रूपमाभाति यत्तत्स्यात्क्षणभङ्गि हि ॥ ७८ ॥

---

स्व एवार्थो यस्य स स्वार्थः । अनेन ममत्वेन गृहीतः पुत्रादिरर्थो यस्याः साऽस्वार्था । निरिङ्गनोऽपरिस्पन्दः ॥ ७४ ॥ ७५ ॥

दुःखादीनां साक्षित्वादप्यात्मनो न दुःखाद्याकारपरिणामो युक्त इत्याह एतस्माच्चेति । ननु दुःख्येव साक्षी भवेदित्यत आह दुःखिन इति ॥७६॥

दुःखिनः साक्षित्वं कथमयुक्तमित्याकाङ्क्षायां तत्र हेतुरुच्यत इत्याह पूर्वस्येति । दुःखित्वं नाम विकारित्वम् । विकारिणः साक्षित्वमनुपपन्नम् । आत्मा च समस्तबुद्धिवृत्तिसाक्षी तस्मान्निरस्तसमस्तपरिणाम इत्यर्थः ॥ ७७ ॥

न केवलं युक्तिमात्रसिद्धमेतत्किन्तु विद्वदनुभवसिद्धमित्याह एवं

उत्पत्तिस्थितिभङ्गेषु कुम्भस्य वियतो यथा ।
नोत्पत्तिस्थितिनाशाः स्युर्बुद्धेरेवं ममापि च ॥ ७९ ॥

सुखदुःखतत्सम्बन्धानां च प्रत्यक्षत्वान्न श्रद्धामात्रग्राह्यमेतत् ।

सुखदुःखादिसम्बद्धां यथा दण्डेन दण्डिनम् ।
राधको वीक्षते बुद्धिं साक्षी तद्वदसंहतः ॥ ८० ॥

एतस्माच्च हेतोर्धियः परिणामित्वं युक्तम् ।

येनैवास्या भवेद्योगः सुखकुम्भादिना धियः ।
तं विदन्ती तदैवान्यं वेत्ति नातो विकारिणी ॥ ८१ ॥

---

सर्वस्मिन्निति । प्रमाणतन्निभेषु प्रमाणतदाभासेषु बुद्धिपरिणामेषु व्यभिचारिषु तदनुयायिनः संविद्रूपस्य साक्षिरूपस्य मम नोच्छित्तिः सम्भवति । उच्छेदसाक्षित्वेनापि स्फुरणात्ततो मद्व्यतिरिक्तं यन्मत्सम्बन्धितया प्रतीयते तदुच्छिद्येत नात्मेत्यर्थः ॥ ७८ ॥

उक्तमेवार्थं दृष्टान्तेनोपपादयति उत्पत्तीति । बुद्धेरेवमिति । बुद्धेरुत्पत्त्यादौ ममोत्पत्त्यादिर्नास्तीत्यर्थः ॥ ७९ ॥

सुखदुःखादिपरिणामानामनात्मधर्मत्वमप्यनुभवसिद्धमित्याह सुखदुःखेति । सुखदुःखादेरहङ्कारसम्बन्धोऽहं सुखीत्यादिप्रत्यक्षसिद्धमित्याह सुखदुःखादिसम्बद्धामिति । यथा दण्डेनासंहतस्तटस्थ एव सन्कश्चिद्राधकः साधको द्रष्टा दण्डिनं वीक्षते तद्वदयमपि साक्षी सुखादिधर्मविशिष्टां बुद्धिं सुखादिभिरसंहतस्तटस्थ एव सन्वीक्षत इत्यर्थः ॥८०॥

बुद्धेः परिणामित्वेनातीतानागतेहत्यानिति सूचितं क्रमद्रष्टृत्वं कतिपयद्रष्टृत्वं च प्रपञ्चयति एतस्माच्चेति । यदा बुद्धिर्बाह्येन कुम्भादिनान्तरेण सुखादिना च सम्बद्धा सती कुम्भादिकं वेत्ति तदैव पटादिकं दुःखादिकं च न वेत्ति ततो बुद्धिर्विकारिणीत्यर्थः ॥ ८१ ॥

अस्याश्च क्षणभङ्गुरत्वे स्वयमेवात्मा साक्षी। नहि कूटस्थावबोधमन्तरेण बुद्धेरेवाविर्भावतिरोभावादिसिद्धिरस्ति

परिणामिधियां वृत्तं नित्याक्रमदृगात्मना।
षड्भावविक्रियामेति व्याप्तं खेनाङ्कुरो यथा॥ ८२॥

सत आत्मनश्चाविकारित्वे युक्तिः।

स्मृतिस्वप्नप्रबोधेषु न कश्चित्प्रत्ययो धियः।
दृशाऽव्याप्तोऽस्त्यतो नित्यमविकारी स्वयंदृशिः॥८३॥

एवं तावत्पराभ्युपगतप्रक्रियाप्रस्थानेन निरस्ताशेषवि-

---

केन तर्हि प्रमाणेन बुद्धेः परिणामित्वमवगम्यत इत्याशङ्क्याह अस्याश्चेति। अस्याः क्षणभङ्गुरत्वे स्वयमात्मैव साक्षी प्रमाणमित्यर्थः। ननु बुद्धिः स्वयमेव स्वभावाभावौ साधयेत्किं साक्षिणेत्याशङ्क्य स्वभावस्य स्वग्राह्यत्वे कर्मकर्तृविरोधप्रसङ्गात्स्वाभावस्य स्वयमेव साधकत्वे सुषुप्त्यभावप्रसङ्गादात्मैव सर्वकल्पनाधिष्ठानतया साधक इत्यपरोक्षत्वमित्याह नहि कूटस्थेति। यद्वा। बुद्धेः परिणामित्वे तद्विषयस्यात्मनोऽपि परिणामिता स्यादित्यत आह अस्याश्चेति। बुद्धिपरिणामसाक्षित्वादात्मा न परिणामीत्यर्थः। कथं बुद्धिपरिणामसाक्षित्वमात्मन इत्यत आह नहीति। परिणामिधियामिति। यथाकाशेन व्याप्त एवाङ्कुरो जायते तद्वन्नित्याक्रमदृगात्मना व्याप्तमेव परिणामिधियां वृत्तं स्वरूपं षड्भावविक्रियां प्राप्नोति तस्मादात्मैव बुद्धिपरिणामसाधक इत्यर्थः॥ ८२॥

एवं बुद्धेर्विकारित्वमुपपाद्येदानीमविकारित्वमात्मन उपपादयति सत आत्मनश्चेति। धियः प्रत्ययेषु स्मृतिविपर्यासप्रमाणात्मकेषु मध्ये कश्चिदपि प्रत्ययश्चैतन्येनाव्याप्तो नास्ति ततः समस्तबुद्धिवृत्तिसाक्षित्वादात्मा कूटस्थ एवेत्यर्थः॥ ८३॥

एवं "सर्वधियां वृत्तमि"त्यारभ्य सांख्यसिद्धान्तमवलम्ब्य बुद्धिरेव

कारैकात्म्यं प्रतिपादितमुपपत्तिभिः । अथाधुना श्रौतीं प्रक्रियामवलम्ब्योच्यते ।

अस्तु वा परिणामोऽस्य दृशेः कूटस्थरूपतः ।
कल्पितोऽपि मृषैवासौ दण्डस्येवाप्सु वक्रता ॥ ८४ ॥
षट्सु भावविकारेषु निषिद्धेष्वेवमात्मनि ।
दोषः कश्चिदिहासक्तुं न शक्यस्तार्किकश्वभिः ॥ ८५ ॥

प्रकृतमेवोपादाय बुद्धेः परिणामित्वमात्मनश्च कूटस्थत्वं युक्तिभिरुच्यते ।

प्रत्यर्थं तु विभिद्यन्ते बुद्धयो विषयोन्मुखाः ।
न भिदावगतेस्तद्वत्सर्वास्ताश्चिन्निभा यतः ॥ ८६ ॥

स्वसम्बद्धार्थ एव ।

---

परिणामिनी नात्मा स तु कूटस्थ इति दर्शितमिदानीमात्मनः परिणामाभ्युपगमेऽपि तस्य मायामयत्वान्न कश्चिद्दोष इति स्वसिद्धान्तमवलम्ब्याह एवं तावदिति । अस्तु वेति । आन्तरो बाह्यश्चात्मनः परिणामः कल्पितोऽप्यङ्गीकृतोऽप्यस्तु तथापि तस्यात्मनः कूटस्थरूपत्वादसावविद्यानिबन्धन एव न तु परमार्थतस्तस्मान्न कश्चिद्विरोध इत्यर्थः ॥ ८४ ॥

एवमात्मनः षड्भावविकाररहितत्वप्रतिपादनेन कर्तृत्वभोक्तृत्वादिसर्वानर्थसम्बन्धोऽपि तस्य निराकृतो द्रष्टव्य इत्याह षट्स्विति ॥ ८५ ॥

प्रकृतमेवोपादाय श्रौतमेव मतमालम्ब्येत्यर्थः । सांख्यसिद्धान्तमेवावलम्ब्येति केचित् । प्रत्यर्थं त्विति । यथा प्रतिविषयं बुद्धयः स्वतो भिद्यन्ते तद्वदवगतेश्चैतन्यस्य न भेदोऽस्ति चिदाकारत्वात्सर्वासां बुद्धिवृत्तीनां तस्माद्घटपटादिबुद्ध्युपाधिभेदपरामर्शमन्तरेण स्वतो भेदानवगमादुपाधिपरामर्शमन्तरेणाविभाव्यमानभेदस्येव नभसः स्वत एकत्वमेवं चैतन्यस्येत्यर्थः ॥ ८६ ॥

बुद्धेः परिणामलक्षणधर्मसम्बन्धप्रतिपादनायोत्तरश्लोक इत्याह स्व-

सावशेषपरिच्छेदिन्यत एव न कृत्स्नवित् ।
नोचेत्परिणमेद्बुद्धिः सर्वज्ञा सात्मवद्भवेत् ॥ ८७ ॥

अतोऽवगतेरेकत्वात् ।

चण्डालबुद्धेर्यद्द्रष्टृ तदेव ब्रह्म बुद्धिदृक् ।
एकं तदुभयोर्ज्योतिर्भास्यभेदादनेकवत् ॥ ८८ ॥

कस्मात् ।

अवस्थादेशकालादिभेदो नास्त्यनयोर्यतः ।
तस्माज्जगद्धियां वृत्तं ज्योतिरेकं सदेक्षते ॥ ८९ ॥

सर्वदेहेष्वात्मैकत्वे प्रतिबुद्धपरमार्थतत्त्वस्याप्यप्रतिबुद्धदेहसम्बन्धादशेषदुःखसम्बन्ध इति चेत्तन्न ।

बोधात्प्रागपि दुःखित्वं नान्यदेहोत्थमस्ति नः ।
बोधादूर्ध्वं कुतस्तत्स्याद्यत्र स्वगतमप्यसत् ॥ ९० ॥

---

सम्बद्धार्थ इति । बुद्धिः परिणामिनीति यतोऽत एव कतिपयपरिच्छेदिनी भूत्वा न कृत्स्नविद्भवति । यदि न परिणमेत्तदा सर्वज्ञा स्यात्ततः परिणामिनी बुद्धिरित्यर्थः ॥ ८७ ॥

अवगतेरेकत्वमस्तु ततः किमित्यत आह अतोऽवगतेरिति । आत्मैक्यं पूर्वमुपपादितं सिध्यतीत्यर्थः । अनेकत्वप्रतीतेरन्यथासिद्धिमाह भास्येति ॥ ८८ ॥

भेदस्य वास्तवत्वं कस्मान्न स्यादित्याशङ्क्य भेदकाभावादिति परिहरति कस्मादित्यादिना । आदिशब्देन भेदका गुणादयो गृह्यन्ते तेषामवस्थादीनां साक्ष्यत्वान्न साक्षिभेदकत्वमित्यर्थः ॥ ८९ ॥

ननु यद्देहस्थे मनसि यस्य ब्रह्मत्वं भाति ततो देहान्तरस्थे मनसि तदभावात्तद्गतदुःखादिसम्बन्धाद्दुःखी स्यादिति शङ्कते सर्वदेहेष्विति । समस्तकल्पनाबीजभूताज्ञानोत्थितेऽप्यन्यगतत्वेन कल्पनान्न तद्दुःखेन दुःखित्वं

न चेयं स्वमनीषिकेति ग्राह्यं । कुतः । श्रुत्यवष्टम्भात् ।

शब्दाद्याकारनिर्भासा ह्यानोपादानधर्मिणी ।
भास्येत्याह श्रुतिर्दृष्टिरात्मनोऽपरिणामिनः ॥ ९१ ॥

का त्वसौ श्रुतिः ।

दृष्टेर्द्रष्टारमात्मानं न पश्येर्दृश्यमानया ।
"विज्ञातारमरे केन विजानीयाद्धि" यां पतिम् ॥९२॥

---

ब्रह्मात्मैक्यापरोक्षेण मूलाज्ञाने बाधिते दुःखित्वसम्भावनापि नास्त्येवान्यस्य तद्गतदुःखित्वस्य स्वगतदुःखित्वस्य च बाधितत्वादिति परिहरति तन्नेति । यत्र यस्मिन्नात्मनि पूर्वं स्वगतत्वेन भातमपि दुःखमिदानीमहं ब्रह्मास्मीति बुद्ध्या बाधितं तत्र कथं पूर्वमन्यगतत्वेन भातमिदानीं मम स्यादित्यर्थः । यत्र प्राक्तनमितिपाठे यदन्यगतं दुःखित्वं प्रागप्यन्यस्मिन्नसदविद्याविजृम्भितं तत्कथमविद्यायां निवृत्तायामन्यस्मिन्नात्मनि वा स्यादित्यर्थः ॥ ९० ॥

बुद्धिरेव परिणामिनी कूटस्थ आत्मेति योऽयमर्थः प्रतिपादितः स तु तार्किकैरिव न केवलं तर्कावष्टम्भादस्माभिः प्रतिपाद्यते किन्तु श्रुत्यवष्टम्भादित्याह न चेयमिति । शब्दाद्याकारेति । श्रुतिर्दृष्टिमन्तःकरणवृत्तिमाहेत्यन्वयः । कथमाहेत्यत आह भास्येत्याहेति । शब्दाद्याकारनिर्भासवती हानोपादानधर्मिणी भूत्वात्मनः प्रकाश्येत्याचष्टे न तु तयात्मा प्रकाश्य इत्याहेत्यर्थः । यद्वा । दृष्टिर्द्विधा पारमार्थिक्यपारमार्थिकी च । तत्र पारमार्थिकी दृष्टिरात्मनः स्वरूपमित्याचष्टे । यान्या शब्दाद्याकारनिर्भासवती जन्मविनाशवती च दृष्टिः सा स्वरूपभूतया दृष्ट्या भास्येत्याह न तु तया स्वरूपभूता दृष्टिर्भास्येत्याहेत्यर्थः ॥ ९१ ॥

अर्थमुपवर्ण्य श्रुतिमवतारयति कात्वसाविति । "न दृष्टेर्द्रष्टारं पश्येः" "विज्ञातारमरे केन विजानीयादि"ति च वाक्यद्वयमत्र प्रमाणमित्यर्थः ॥ ९२ ॥

यस्मात्सर्वप्रमाणोपपन्नोऽयमर्थस्तस्मादतोऽन्यथावादिनो जात्यन्धा इवानुकम्पनीया इत्याह ।

तदेतदद्वयं ब्रह्म निर्विकारं कुबुद्धिभिः ।
जात्यन्धगजदृष्ट्येव कोटिशः परिकल्प्यते ॥ ९३ ॥

प्रमाणोपपन्नस्यार्थस्यासम्भावनात्तदनुकम्पनीयत्वसिद्धिः । तदेतदाह ।

यद्यद्विशेषणं दृष्टं नात्मनस्तदनन्वयात् ।
स्वस्य कुम्भादिवत्तस्मादात्मा स्यान्निर्विशेषणः ॥ ९४ ॥

अतश्चात्मनो भेदासंस्पर्शो भेदस्य मिथ्यास्वाभाव्यादत आह ।

---

एवं श्रुतिस्मृतिविद्वत्प्रत्यक्षानुमानादीनां सम्भवादविश्वासो न वेदान्तसिद्धान्ते करणीय इत्यभिप्रेत्याह यस्मादिति । जात्यन्धगजदृष्ट्येवेति । यथा जात्यन्धाः स्वस्वस्पर्शगृहीतहस्तपादाद्यवयवेष्वयं गजोऽयं गज इति तत्र तत्रावयवेषु गजभावं कल्पयन्ति तद्वत्स्वस्वदुस्तर्कदूषितबुद्धिभिश्चार्वाकाद्यैस्तर्काभासदृष्टप्रकारेण कूटस्थमद्वितीयं ब्रह्माप्यन्यथा कल्प्यत इत्यर्थः ॥ ९३ ॥

न्यायेन स्वसिद्धान्तव्यवस्थापकाः कथं शोच्याः स्युरित्याशङ्क्य श्रुतिन्यायाभ्यां निर्णीतस्यार्थस्य तर्काभासैरसम्भवकरणाच्छोच्यत्वमित्याह प्रमाणोपपन्नस्यार्थस्येति । श्रुतिन्यायाभ्यां निर्णीतमर्थमाह तदेतदाहेति । यथा घटाकाशः करकाकाश इत्यत्राकाशविशेषणीभूतघटादिभिरनन्वयादाकाशस्य निर्विशेषत्वमेवं घटो भातीत्यादौ भानविशेषणीभूतघटादीनां भानैक्याभावाद्भानस्वभावस्यात्मनो निर्विशेषत्वं सिद्धमित्यर्थः ॥ ९४ ॥

आत्मनो भेदाभासासंस्पर्शे हेत्वन्तरमाह अवगत्यात्मन इति । यद्वा । विशेषणानामात्मासंस्पर्शित्वेऽप्यन्यत्वेन स्वरूपेण सम्भवोऽङ्गीकृत इति

अवगत्यात्मनो यस्मादागमापायि कुम्भवत् ।
साहङ्कारमिदं विश्वं तस्मात्तत्स्यात्कचादिवत् ॥ ९५ ॥

सर्वस्यैवानुमानव्यापारस्य फलमियदेव यद्विवेकग्रहणम् । तदुच्यते ।

बुद्धेरनात्मधर्मत्वमनुमानात्प्रसिद्ध्यति ।
आत्मनोऽप्यद्वितीयत्वमात्मत्वादेव सिद्ध्यति ॥ ९६ ॥

यद्यप्ययं ग्रहीतृग्रहणग्राह्यगृहीति तत्फलात्मक आब्रह्मस्तम्बपर्यन्तः संसारोऽन्वयव्यतिरेकाभ्यामनात्मतया निर्माल्यवदपविद्धस्तथापि तु नैवासौ स्वतःसिद्धात्मव्यति-

---

शङ्काव्यावृत्त्यर्थमाह अवगत्यात्मन इति । अवगत्यात्मनः सकाशात्साहङ्कारमिदं विश्वं कुम्भवदागमापायि उत्पत्तिविनाशवदत एव कुम्भवन्नात्मस्वरूपं ततः केशोण्ड्रकादिवद्बाध्यमित्यर्थः । यद्वा । यस्मादात्मनः सकाशात्साहङ्कारमिदं विश्वं कुम्भवदागमापायितया सिध्यति तद्विश्वं ततः केशोण्ड्रकादिवत्स्वरूपं न भवतीत्यर्थः ॥ ९५ ॥

ननु तर्ह्यात्मनोऽन्वयव्यतिरेकलक्षणानुमानव्यापाराधीनसिद्धिकत्वादात्मनः स्वप्रकाशत्वाभ्युपगमो भज्येतेत्यत आह सर्वस्यैवेति । सर्वस्यैवानुमानव्यापारस्य बुद्ध्यादिप्रपञ्चविवेचकत्वमेव फलं नात्मस्वरूपबोधकत्वम् । ततो न स्वप्रकाशत्वभङ्ग इत्यर्थः । तर्ह्यात्मनोऽद्वितीयत्वगोचरात्प्रमाणात्स्वप्रकाशत्वभङ्ग इत्याशङ्क्याह आत्मनोऽप्यद्वितीयत्वमिति । द्वितीयाभाव एव तत्र प्रमाणगोचरः । अद्वितीयत्वं तु स्वरूपमेव तदात्मत्वादात्मस्वभावबलात्स्वत एव सिध्यति स्वरूपस्य स्वप्रकाशत्वादित्यर्थः ॥ ९६ ॥

सांख्यसिद्धान्तसाम्यमाशङ्क्य ततो वैषम्यं दर्शयति यद्यपीत्यादिना । गृह्यतेऽनेनेति ग्रहणं प्रमाणं गृहीतिरर्थज्ञानम् । तत्फलमर्थाविच्छिन्नं स्फुरणम् । तथाभूतस्य संसारस्यात्मासंस्पर्शित्वमात्मनोऽसंसारित्वम् ।

रिक्तानात्मप्रकृतिपदार्थव्यपाश्रयः सांख्यानामिव किं तर्हि स्वतःसिद्धानुदितानस्तमितकूटस्थात्मप्रज्ञानमात्रशरीरप्रतिबिम्बिताविचारितसिद्धात्मानवबोधाश्रय एव तदुपादानत्वात्तस्येतीममर्थं निर्वक्तुकाम आह ।

ऋते ज्ञानं न सन्त्यर्था अस्ति ज्ञानमृतेऽपि तान् ।
एवंधियो हिरुग्ज्योतिर्विविच्यादनुमानतः ॥ ९७ ॥

यस्मात्प्रमाणप्रमेयव्यवहार आत्मानवबोधाश्रय एव तस्मात्सिद्धमात्मनोऽप्रमेयत्वं नैव हि कार्यं स्वकारणमतिलंघ्यान्यत्राकारक आस्पदमुपनिबध्नाति । अत आह ।

व्यवधीयन्त एवामी बुद्धिदेहघटादयः ।
आत्मत्वादात्मनः केन व्यवधानं मनागपि ॥ ९८ ॥

---

संसारस्य च प्रधानकार्यत्वेन तदाश्रयत्वं च सांख्याः स्वीकुर्वन्ति । वयं त्वात्मन्यध्यस्तानिर्वचनीयाज्ञानविजृम्भिततया तदाश्रयः संसारः प्रत्यगात्मनि परिकल्पित इत्यभ्युपगच्छामः । तस्मान्न साम्यमित्यर्थः । यद्वा । अनुदितानस्तमितकूटस्थात्मप्रज्ञानमात्रशरीरप्रतिबिम्बितश्चासावविचारितसिद्धात्मानवबोधाश्रयश्चेति विग्रहः । ऋते ज्ञानमिति । जानातीति ज्ञानं द्रष्टा तं विना न सन्ति न प्रतीयन्ते चाहङ्कारादयोऽर्थास्तान्विनापि द्रष्टास्ति प्रतीयते च तस्मादर्थानां सत्ताप्रतीत्योर्नित्यसापेक्षत्वात्तेभ्यः स्वयंज्योतिःस्वरूपं निरपेक्षसिद्धिकमात्मानं घटद्रष्टारं घटादिवानुमानतो विविच्याद्विविक्तं कुर्यात्ततश्च दृश्यप्रपञ्चादात्मनि निकृष्टे सति प्रपञ्चस्य स्वातन्त्र्येण सिद्ध्यसम्भवादात्माज्ञानोपादानत्वेन तदाश्रयत्वमर्थात्सिध्यतीत्यर्थः ॥ ९७ ॥

एतेनात्मनोऽप्रमेयत्वमपि साधितं भवतीत्याह यस्मादिति । व्यवधीयन्त इति । बुद्धिसिद्धेरात्मचैतन्याभासोदयापेक्षत्वात्तदनपेक्षस्वतःसि-

स्वयमनवगमात्मकत्वादनवगमात्मकत्वं च मोहमात्रोपादानत्वात् ।

प्रमाणमन्तरेणैषां बुद्ध्यादीनामसिद्धता ।
अनुभूतिफलार्थित्वादात्मा ज्ञः किमपेक्षते ॥ ९९ ॥

वक्ष्यमाणेतरेतराध्याससिद्ध्यर्थमुक्तव्यतिरेकानुवादः ।

घटबुद्धेर्घटाच्चार्थाद्द्रष्टुर्यद्वद्विभिन्नता ।
अहम्बुद्धेरहंगम्याद्दुःखिनश्च तथा दृशेः ॥ १०० ॥

---

द्धात्मस्वभावापेक्षया बुद्धेर्व्यवधानं देहस्य पुनर्बुद्ध्यपेक्षत्वादिन्द्रियापेक्षत्वाच्च ततोऽपि व्यवधानम् । घटादीनां पुनर्देशकालादिसन्निधानापेक्षत्वाद्बुद्ध्याद्यपेक्षत्वाच्च देहादपि व्यवधानम् । नैवमात्मनो व्यवधानमस्ति व्यवहितं च प्रमाणगम्यं तस्मादात्मनोऽप्रमेयत्वं सिध्यतीत्यर्थः ॥ ९८ ॥

बुद्ध्यादीनां व्यवहितत्वे स्वयमेव हेतुमाह स्वयमिति । यद्वा । व्यवहितानां प्रमाणाधीनसिद्धिकत्वे हेतुमाह स्वयमिति । अनवगमात्मकत्वादस्फुरणस्वभावत्वादित्यर्थः । अनुभूतिफलार्थित्वादिति । अनुभूतिरेव फलमनुभूतिफलं तदर्थित्वात् । स्वतस्तद्रहितानां प्रमाणाद्यपेक्षास्ति तस्माद्व्यवधानमित्यर्थः । नन्वात्माप्युपनिषत्प्रमाणमपेक्षत इत्याशङ्क्य चित्स्वभावत्वादज्ञाननिवृत्तिव्यतिरेकेण प्रमित्यन्तरं नापेक्षत इत्याह आत्मा ज्ञ इति ॥ ९९ ॥

आत्मानात्मनोरुक्तन्यायेनात्यन्तविविक्तस्वभावयोः संयोगसमवायतादात्म्यादिसम्बन्धासम्भवादन्तरेण च सम्बन्धं प्रकाश्यप्रकाशकभावायोगादाध्यासिकसम्बन्धो वाच्यस्तस्य चाध्यासस्य विद्यमानभेदयोस्तदग्रहपूर्वकत्वादुक्त एव व्यतिरेकः पुनर्विवक्षिताध्याससिद्ध्यर्थमनूद्यत इत्याह वक्ष्यमाणेति । दृश्याद्द्रष्टुरिवाहङ्कारदशायामकर्मकतया भासमानसाक्षिवेद्याद्दुःखिनः साक्षिचैतन्यस्यापि व्यतिरेकः साधित इत्यर्थः॥१००॥

एवमेतयोरात्मानात्मनोः स्वतः परतः सिद्धयोर्लौकिक-रज्जुसर्पाध्यारोपवदविद्योपाश्रय एवेतरेतराध्यारोप इ-त्येतदाह ।

अभ्रयानं यथा मोहाच्छशभृत्यध्यवस्यति ।
सुखित्वादीन्धियो धर्मांस्तद्वदात्मनि मन्यते ॥ १०१ ॥
दग्धृत्वं च यथा वह्नेरयसो मन्यते कुधीः ।
चैतन्यं तद्वदात्मीयं मोहात्कर्त्तरि मन्यते ॥ १०२ ॥

सर्व एवायमात्मानात्मविभागः प्रत्यक्षादिप्रमाणवर्त्मन्य-नुपनिपतितोऽविद्योत्सङ्गवर्त्त्यैव न परमात्मव्यपाश्रयो ऽस्याश्चाविद्यायाः सर्वानर्थहेतोः कुतो निवृत्तिरिति चे-त्तदाह ।

दुःखराशेर्विचित्रस्य सेयं भ्रान्तिश्चिरन्तनी ।
मूलं संसारवृक्षस्य तद्बाधस्तत्त्वदर्शनात् ॥ १०३ ॥

---

एवं व्यतिरेकं प्रदर्श्य तदग्रहनिबन्धनोऽध्यासः प्रदर्श्यत इत्याह एव-मेतयोरिति । अभ्रयानमिति ॥ १०१ ॥

एवमात्मन्यनात्मधर्माध्यासमभिधायानात्मन्यात्मधर्माध्यासं सदृष्टा-न्तमाह दग्धृत्वमिति ॥ १०२ ॥

उत्तरश्लोकपूर्वपादत्रयेण पूर्वोक्तार्थोऽनूद्यत इति तात्पर्यमाह सर्व एवायमित्यारभ्य न परमात्मव्यपाश्रय इत्यन्तेन । अविद्योत्सङ्गवर्ती । अविद्याश्रय इत्यर्थः । इदानीं चतुर्थपादव्यावर्त्त्यां शङ्कामाह अस्याश्चेति । श्लोकमवतारयति तदाहेति । चिरन्तनी भ्रान्तिरविद्या सा मूलमत ए-वाश्रयस्तस्याश्चाद्वैतसाक्षात्कारान्निवृत्तिरित्यर्थः । नन्वद्वैतसाक्षात्कार-स्याविद्यानिवर्त्तकत्वं क्वापि न दृश्यत इति शङ्कित्वाधिष्ठानसाक्षात्कार-स्याध्यासबाधकस्य लोके दृष्टत्वादत्राप्यनुमेयमित्याह तद्बाधस्तत्त्वदर्श-नादिति ॥ १०३ ॥

तद्बाधस्तत्त्वदर्शनादिति कुतः सम्भाव्यत इति चेदत आहागोपालाविपालपण्डितमियमेव प्रसिद्धिः ।

अप्रमोत्थं प्रमोत्थेन ज्ञानं ज्ञानेन बाध्यते ।
अहिरज्ज्वादिवद्बाधो देहाद्यात्ममतेस्तथा ॥ १०४ ॥

लौकिकप्रमेयवैलक्षण्यादात्मनो नेहानधिगताधिगमः प्रमाणफलम् ।

अविद्यानाशमात्रं तु फलमित्युपचर्यते ।
नाज्ञातज्ञापनं न्याय्यमवगत्येकरूपतः ॥ १०५ ॥

यस्मादात्मानवबोधमात्रोपादानाः प्रमात्रादयस्तस्मात् ।

न विदन्त्यात्मनः सत्तां द्रष्टृदर्शनगोचराः ।
न चान्योन्यमतोऽमीषां ज्ञेयत्वं भिन्नसाधनम् ॥१०६॥

---

कुतः सम्भाव्यत इत्यादिना । मिथ्याज्ञानसम्यग्ज्ञानयोर्बाध्यबाधकत्ववन्मिथ्याज्ञानप्रतिपन्नसम्यग्ज्ञानप्रतिपन्नयोरप्यहिरज्ज्वोर्बाध्यबाधकभावः संप्रतिपन्न इत्याह अहिरज्ज्वादिवदिति । दार्ष्टान्तिकमाह देहाद्यात्मेति । देहाद्यात्मज्ञानयोर्देहात्मनोश्च बाध्यबाधकभावः सम्भवतीत्यर्थः ॥ १०४ ॥

ननु तत्त्वदर्शनादित्युक्तत्वात्प्रमाणजनितप्राकट्यविषयत्वमात्मनोऽभ्युपगतं ततः स्वतःसिद्धत्वहानिरित्याशङ्क्याह लौकिकेति । लौकिकस्य प्रमेयस्य यथानधिगताधिगतिः प्रमेयपरिच्छित्तिः फलं भवति नैवमात्मनः प्रकाशस्वरूपत्वात्तस्माद्ध्यस्ताज्ञानव्यावृत्तिरेव तस्य फलमित्यर्थः ॥ १०५ ॥

आत्मव्यतिरिक्तस्यात्मवेद्यत्वादपि न तदधीनाधिगम आत्मेत्याह यस्मादिति । द्रष्टृदर्शनगोचरा द्रष्टा दर्शनं गोचराश्च ते तावत्स्वात्मानं स्वयमेव न जानन्ति जडत्वात् । नाप्यन्योन्यमतस्तेषां स्वव्यतिरिक्तात्मवेद्यत्वमेव तस्मान्न तदधीनाधिगतिरात्मेत्यर्थः ॥ १०६ ॥

द्रष्ट्रादेरसाधारणरूपज्ञापनायाह ।

बाह्य आकारवान् ग्राह्यो ग्रहणं निश्चयादिमत् ।
अन्वय्यहमिति ज्ञेयः साक्षी त्वात्मा ध्रुवः सदा ॥१०७॥

सर्वकारकक्रियाफलविभागात्मकसंसारशून्य आत्मेति कारकक्रियाफलविभागसाक्षित्वादात्मनस्तदाह ।

ग्राहकग्रहणग्राह्यविभागे योऽविभागवान् ।
हानोपादानयोः साक्षी हानोपादानवर्जितः ॥१०८॥

---

द्रष्ट्रादिव्यतिरिक्त आत्मा नास्माकं प्रसिद्ध इति परमतमाशङ्क्य लक्षणं तस्योपपादनायाह द्रष्ट्रादेरिति । बाह्यः पराग्भूत आकारवान्पृथुबुध्नोदरत्वादिधर्मवान्ग्राह्यः । तदुक्तं वार्त्तिकेऽपि । "विभिन्नो बहिराभाति जातिरूपक्रियादिमान् । विभिन्नोऽनुभवादेव ज्ञातुर्ज्ञानात्स गोचर" इति । एकस्मिन्नेव ज्ञातरि निश्चयस्मृत्यादिविभागवत्त्वेन ज्ञातृकर्तृकं यदाभाति तद्ग्रहणम् । तदुक्तम् । "स्मरणादिविभागेन ज्ञातर्यैकत्र यत्पृथक् । प्रथतेऽनेकरूपाभं तद्ज्ञानं ज्ञातृकर्तृकमिति" । अहं शृणोम्यहं निश्चिनोम्यहं स्मरामीति च निश्चयादिषु व्यभिचारिषु योऽहंरूपेणान्वेति प्रत्यभिज्ञया एकत्वेनानुसन्धीयते स द्रष्टा । तदुक्तम् । "स्मृतिनिश्चितिसंशीतिरागादिहिरुगात्मसु । अहंरूपेण योऽन्वेति स प्रमाता परो मत" इति । साक्षी यः पुनरेषां त्रयाणां भावाभावसाधकः सुषुप्तिकैवल्यादिष्वन्वयी कूटस्थनित्यः स परैरपि बलादभ्युपेयोऽन्यथा द्रष्ट्रादेरसिद्धेरितिभावः ॥ १०७ ॥

साक्षित्वेनासंसारित्वमप्यात्मनः प्रसाधितमित्याह सर्वकारकक्रियेति । सर्वकारकक्रियाफलविभागात्मकसंसारशून्य आत्मेतिगम्यत इतिशेषः । यद्वा । इतिशब्दो हेत्वर्थः कारकक्रियाफलविभागसाक्षित्वादित्युत्तरेण सम्बध्यते । ग्राहकेति । ग्राहकादीनां त्रयाणां विभागेषु त्रिष्वपि स्फुरणरूपेणाविभागवान्यस्तेषां हानोपादानयोर्भावाभावयोः साक्षी स तत्साक्षित्वादेव स्वयं हानोपादानलक्षणसंसारवर्जित एव भवतीत्यर्थः ॥ १०८ ॥

ग्राहकादिनिष्ठैव ग्राहकादिभावाभावविभागसिद्धिः कस्मान्नेति चेत्तदाह ।

स्वसाधनं स्वयं नष्टो न नाशं वेत्त्यभावतः ।
अत एव न चान्येषामतोऽसौ भिन्नसाक्षिकः ॥ १०९ ॥

ग्राहकादेरन्यसाक्षिपूर्वकत्वसिद्धेः स्वसाक्षिणोऽप्यन्यसाक्षिपूर्वकत्वादनवस्थेति चेत्तन्न साक्षिणो व्यतिरिक्तहेत्वनपेक्षत्वादत आह ।

धीवन्नापेक्षते सिद्धिमात्मान्यस्मादविक्रियः ।
निरपेक्षमपेक्ष्यैव सिद्ध्यन्त्यन्ये न तु स्वयम् ॥ ११० ॥

यतो ग्राहकादिष्वात्मभावोऽविद्यानिबन्धन एव तस्मादन्वयव्यतिरेकाभ्यां विभज्यानात्मनः स्वयम् ।

---

ननु ग्राहकादिविभागसिद्धिहेतुत्वेन साक्षिणः सिद्धिरुच्यते ग्राहकादिविभागोऽपि ग्राहकादिभिरेव सिध्येत्ततः किं साक्षिणेत्याशङ्कते ग्राहकादीति । निरस्यति तदाहेति । ग्राहकादीनामन्यतमो नष्टः पदार्थः स्वनाशं स्वसाधनं च यथा भवति तथा स्वयं न वेत्ति स्वस्याभावादेवात एवान्येषामपि ग्रहणादीनां नाशं न वेत्ति । नाशश्च प्रतीयते तस्माद्ग्राहकादिव्यतिरिक्तात्मसाक्षिक एवासावित्यर्थः ॥ १०९ ॥

ननु स्वग्राहकस्यापि ग्राह्यत्वे साक्षिणोऽपि ग्राह्यत्वं ततश्चानवस्थेत्याशङ्क्य तस्याजडत्वेन स्वतःसिद्धावन्यानपेक्षत्वान्नैवमिति परिहरति ग्राहकादेरित्यादिना । धीवन्नापेक्षत इति । बुद्ध्यादिर्यथा जडत्वात्स्वसिद्धिमन्यस्मादपेक्षते नैवमात्मा स्वप्रकाशः स्वसिद्धिमन्यस्मादपेक्षत इत्यर्थः । अन्येषां सर्वेषामात्मग्राह्यत्वेनात्मग्राहकत्वायोगाच्च नान्यग्राह्यत्वमात्मन इत्याह निरपेक्षमिति ॥ ११० ॥

इदानीं पूर्वप्रसाधितस्येतरेतराध्यासस्य फलमुपसंहरति यत इति । उत्पत्तीति । जगत उत्पत्तिस्थितिनाशेषु य ईश्वरोऽविकारयाऽवगत्या-

उत्पत्तिस्थितिनाशेषु योऽवगत्यैव वर्त्तते ।
जगतोऽविकारयावेहि तमस्मीति न नश्वरम् ॥ १११ ॥

स्वतःसिद्धात्मचैतन्यप्रतिबिम्बिताविचारितसिद्धिकात्मानवबोधोत्थेतरेतरस्वभावापेक्षसिद्धत्वात्स्वतश्चासिद्धेरनात्मनो द्वैतेन्द्रजालस्य ।

न स्वयं स्वस्य नानात्वं नावगत्यात्मना यतः ।
नोभाभ्यामप्यतः सिद्धमद्वैतं द्वैतबाधया ॥ ११२ ॥

यथोक्तार्थप्रतिपत्तिद्रढिम्ने श्रुत्युदाहरणोपन्यासः ।

नित्यावगतिरूपत्वात्कारकादिर्न चात्मनः ।
अस्थूलं नेतिनेतीति न जायत इति श्रुतिः ॥ ११३ ॥

---

ऽवगतिरूपेण वर्त्तते तमहमस्मीत्यवेहि विजानीहि न तु नश्वरं प्रमाश्रादिरूपमित्यर्थः । भुरिगनुष्टुबियं जगतोऽविकारयाऽवेहीत्यक्षराधिक्यात् । तथा च पिङ्गलाचार्यः सर्वच्छन्दोविषयमाह । "न्यूनाधिकेनैकेन निचृद्भुरिजाविति" । तच्चैतल्लोकवेदसाधारणमिति भरताचार्यः प्राह ॥ १११ ॥

तमसीत्यवेहि न नश्वरमित्युक्तत्वादात्मव्यतिरिक्तमपि वस्त्वङ्गीकृतमित्याशङ्क्य तस्य स्वतः परतश्चासिद्धेः प्रत्यगात्माश्रयानिर्वाच्यानाद्यविद्याविजृम्भितत्वान्नैवमित्याह स्वतःसिद्धेति । चैतन्यप्रतिबिम्बितं स्फुरितमितरेतरस्वभावापेक्षसिद्धत्वादिति । प्रतियोगिनो भेदेन सिद्धौ धर्मिणस्ततो भेदेन सिद्धिस्तत्सिद्धौ च प्रतियोगिनो भेदसिद्धिरितिपरस्पराश्रयत्वादित्यर्थः । न स्वयमिति । स्वस्य द्वैतेन्द्रजालस्य स्वयमेव स्वेनैव नानात्वं न सिद्धं जडत्वात् । नाप्यवगतिरूपेण जडाजडयोरैक्यायोगात् । नोभाभ्यामपि संयोगसमवायादिसम्बन्धासम्भवात् । अतो दुर्निरूपसिद्धिकत्वाद्द्वैतेन्द्रजालस्याद्वैतमेव परमार्थत इत्यर्थः ॥ ११२ ॥

आत्मनः कर्त्तृत्वाद्यभावे श्रुतिवाक्यमुदाहरतीत्याह यथोक्तेति ॥ ११३ ॥

सर्वस्यास्य ग्राहकादेर्द्वैतप्रपञ्चस्यात्मानवबोधमात्रोपादानस्य स्वयं सेद्धुमशक्यत्वादात्मसिद्धेश्चानुपादेयत्वात् ।

आत्मनश्चेन्निवार्यन्ते बुद्धिदेहघटादयः ।
षष्ठगोचरकल्पास्ते विज्ञेयाः परमार्थतः ॥ ११४ ॥

कुतो न्यायबलादेवं निश्चितं प्रतीयते । यस्मात् ।

नित्यां संविदमाश्रित्य स्वतःसिद्धामविक्रियाम् ।
सिद्धायन्ते धियो बोधास्तांश्चाश्रित्य घटादयः॥११५॥

यस्मान्न कयाचिदपि युक्त्यात्मनः कारकत्वं क्रियात्वं फलत्वं चोपपद्यते तस्मादात्मवस्तुयाथात्म्यानवबोधमात्रोपादानत्वान्नभसीव रजोधूमतुषारनीहारनीलत्वाद्यध्यासो यथोक्तात्मनि सर्वोऽयं क्रियाकारकफलात्मकसंसारोऽहम्ममत्वयत्नेच्छादिमिथ्याध्यास एवेति सिद्धमिममर्थमाह ।

---

बुद्ध्यादिद्वैतप्रपञ्चस्यात्मव्यतिरिक्तासाधकत्वात्तस्य जडस्य स्वतःसिद्ध्यनुपपत्तेरात्मचैतन्यस्य जडं प्रति संक्रमयितुमशक्यत्वेन तस्मादपि सिद्धेरुपपादयितुमशक्यत्वाज्जडस्य मिथ्यात्वं बलादापततीत्याह सर्वस्येति । आत्मनश्चेदिति । आत्मनः स्वरूपत्वेन तदीयत्वेन च बुद्ध्यादयस्तस्मान्निवार्यन्ते चेदसत्कल्पा भवन्तीत्यर्थः ॥ ११४ ॥

ननु बुद्ध्यादेर्द्वैतप्रपञ्चस्यापरोक्षतया प्रतिभासमानस्य कथं षष्ठगोचरकल्पत्वमित्याक्षिपति कुत इति । परिहरति यस्मादिति । अपरोक्षतया स्वतःप्रकाशमानसंविदैक्याध्यासाद्धीवृत्तीनां सिद्धिरापरोक्ष्यं तत्र प्रतिबिम्बत्वाच्च घटादीनामपरोक्षप्रतिभासो न तु वास्तवस्तस्मात्षष्ठगोचरकल्पत्वं युक्तमित्यर्थः ॥ ११५ ॥

प्रपञ्चमिथ्यात्वमुपसंहरति यस्मान्न कयाचिदपीत्यादिना । यथोक्तात्मनि क्रियाकारकादिशून्य आत्मनीत्यर्थः । अहंमिथ्याभिशापेनेति । अवि-

अहम्मिथ्याभिशापेन दुःख्यात्मा तद्बुभुत्सया ।
इतः श्रुतिं तया नेतीत्युक्तो कैवल्यमास्थितः ॥११६॥

तस्यास्य मुमुक्षोः श्रौताद्वचसः स्वप्ननिमित्तोत्सारितनिद्रस्येवेयं निश्चितार्था प्रमा जायते ।

नाहं न च ममात्मत्वात्सर्वदानात्मवर्जितः ।
भानाविव तमोध्यासोऽपह्नवश्च तथा मयि ॥ ११७ ॥

सोऽयमेवं प्रतिपन्नस्वभावमात्मानं प्रतिपन्नोऽनुक्रोशति ।

यत्र त्वस्येति साटोपं कृत्स्नद्वैतनिषेधिनीम् ।
प्रोत्सारयन्तीं संसारमश्रौषं न किं श्रुतिम् ॥ ११८ ॥

---

धमानाहङ्कारात्मनाभिशापेनापवादेन दुःखी सन्नात्मा तद्बोधनेच्छया मातृकल्पां श्रुतिमितः प्राप्तस्तया च "नेतिनेत्यात्मा ऽगृह्यो न हि गृह्यत" इत्यादिलक्षणया निराकृतापवादोऽध्यस्ताहंकारादिकं विहाय स्वस्थः कैवल्यमास्थित इत्यर्थः ॥ ११६ ॥

तर्हि श्रुत्याचार्यादिप्रपञ्चस्य वास्तवत्वमभ्युपेयम् । मिथ्यात्वे बाष्पधूमादिवत्प्रमाजनकत्वानुपपत्तिरित्याशङ्क्यासत्यादपि प्रमोत्पत्तिं सदृष्टान्तमाह तस्यास्येति । नाहं न चेति । भानौ तमोध्यास इवाहङ्कारादयः प्रत्यगात्मन्यध्यस्ता एव न तु परमार्थतः सन्ति तस्य चैतन्यमात्रस्वरूपत्वात्ततस्तन्निवृत्तौ निर्विशेष आत्मेति मुमुक्षोः प्रमा जायत इत्यर्थः । ननु कथं निर्विशेष आत्मेति प्रमा जायते निवृत्तिलक्षणस्य विशेषस्य विद्यमानत्वादित्यत आह अपह्नवश्चेति । अहंकारादिर्यथात्मन्यध्यस्तस्तथा तदपह्नवोऽपि तस्मिन्नध्यस्त एव कालत्रयेऽपि तस्मिन्नहंकारादेरसत्त्वादेव परमार्थतो निवृत्त्यनुपपत्तेरित्यर्थः ॥ ११७ ॥

एवं श्रुतिस्मृतिवचनाकर्णनमात्रान्निरस्तेऽपि संसारे वैषयिकसुखलवविप्रलब्धचेतस्तया एतावन्तं कालं प्रमत्तोऽहमासमहो कष्टमिति विदुषोऽनुक्रोशं दर्शयति मुमुक्षूणां प्ररोचनाय सोऽयमिति । "यत्र त्वस्य

इत्योमित्यवबुद्धात्मा निष्फलोऽकारकोऽक्रियः ।
विरक्त इव बुद्ध्यादेरेकाकित्वमुपेयिवान् ॥ ११९ ॥

इति श्रीनैष्कर्म्यसिद्धौ सम्बन्धाख्यायां द्वितीयोऽध्यायः ॥

---

सर्वमात्मैवाभूत्तत्केन कं पश्येदि"ति समस्तसंसारनिषेधिनीं श्रुतिं कि-महं नाज्ञासिषमिति स्वात्मानं विनिन्दतीत्यर्थः ॥ ११८ ॥

इदानीं विद्याफलं दर्शयन्नध्यायमुपसंहरति इत्योमिति । निष्कलोऽकारकोऽक्रिय इति श्रुत्याचार्योक्तमर्थमनुभवन्नभ्यासितुर्ज्ञानमभिनयति इत्योमिति। अर्थादोंकारस्यैव ब्रह्मप्रतिपत्तिसाधनत्वमिति दर्शितं भवति। विरक्त इवेति । यथा हि कश्चिद्विरक्तः पुत्रमित्रकलत्रादिलक्षणात्संसा-रदुःखादुत्थाय स्वयमेकाकी वर्त्तते तद्वदयमप्यात्मा सकलसंसारहेतु-भूताद्बुद्ध्यादेरुत्थाय स्वयमेकल एव स्वमहिम्नि तिष्ठतीत्यर्थः ॥ ११९ ॥

इति श्रीज्ञानोत्तममिश्रविरचितायां नैष्कर्म्यसिद्धिचन्द्रिकायां द्वितीयोऽध्यायः समाप्तः ॥ २ ॥

# तृतीयोऽध्यायः ।

सर्वोऽयं प्रमितिप्रमाणप्रमेयप्रमातृलक्षण आब्रह्मस्तम्बपर्यन्तो मिथ्याध्यास एवेति बहुश उपपत्तिभिरतिष्ठिपम् । आत्मा च जन्मादिषड्भावविकारवर्जितः कूटस्थबोध एवेति स्फुटीकृतम् । तयोश्च मिथ्याध्यासकूटस्थात्मनोर्नान्तरेणाज्ञानं सम्बन्धोऽन्यत्रचोदनापरिप्रापितात् । यथे"यमेवर्गग्निः सामे"ति । तच्चाज्ञानं स्वात्ममात्रनिमित्तं न सम्भवतीति कस्यचित्कस्मिंश्चिद्विषये भवतीत्य-

---

श्रीगणपतिसरस्वतिसद्गुरुभ्यो नमो नमः । हरिः । ॐ । वर्त्तिष्यमाणस्याध्यायस्यातीताध्यायेन संगतिं दर्शयितुं वृत्तं कीर्त्तयति सर्वोऽयमिति । पदार्थपरिशोधनाय विचारानान्तरीयकतया सर्वस्य प्रपञ्चस्य मिथ्यात्वं दर्शितमित्यर्थः । इदानीं साक्षात्प्रतिपादितमर्थान्तरं दर्शयति वर्त्तिष्यमाणविचारोपयोगित्वात् आत्मा चेति । तर्हि पदार्थशोधनस्य सम्यङ्निष्पादितत्वाद्विदितपदपदार्थस्य च स्वयमेव वाक्यार्थज्ञानोत्पत्तेः किमर्थस्तृतीयाध्यायारम्भ इत्यत आह तयोश्चेति । अध्यस्यमानाधिष्ठानयोः शुक्तिरूप्ययोरिवाधिष्ठानविषयाज्ञानव्यतिरेकेण सम्बन्धासम्भवादज्ञानं तावदहमिदं ममेदमिति प्रतीयमानात्मानात्मसम्बन्धघटकमभ्युपेयम् । तस्य चाज्ञानस्य निवृत्तिव्यतिरेकेण पुरुषार्थापरिसमाप्तेस्तन्निवृत्तेश्च वक्ष्यमाणन्यायेन वाक्याधीनत्वाद्वाक्यव्याख्यानायारम्भो घटत इति भावः । अधिष्ठानाध्यस्यमानयोरज्ञानव्यतिरेकेणापि सम्बन्धो दृश्यत इत्याशङ्क्याह अन्यत्रेति । निवर्त्त्याज्ञानस्य निवर्त्तकज्ञानेन समानाश्रयविषयत्वनियमस्येदं रजतमियं शुक्तिरित्यादौ दर्शनादिहापि ब्रह्मज्ञानेनात्माज्ञानस्य समानाश्रयविषयत्वं दर्शनीयमिति तत्साधनायोपक्रमते तच्चाज्ञानमिति । अज्ञानं स्वसत्ताप्रतीत्योः स्वयमेव प्रयोजकं न भवति

भ्युपगन्तव्यम् । इह च पदार्थद्वयं निर्द्धारितमात्मानात्मा च । तत्रानात्मनस्तावन्नाज्ञानेनाभिसम्बन्धः । तस्य हि स्वरूपमेवाज्ञानं न हि स्वतोऽज्ञानस्याज्ञानं घटते । सम्भवदप्यज्ञानस्वभावेऽज्ञानं कमतिशयं जनयेत् । न च तत्र ज्ञानप्राप्तिरस्ति येन तत्प्रतिषेधात्मकमज्ञानं स्यात् । अनात्मनश्चाज्ञानप्रसूतत्वात् । न हि पूर्वसिद्धं सत्ततो

---

नित्यपरतन्त्रत्वात्तस्मात्तस्याश्रयविषयौ निरूप्यमाणौ ज्ञानेन समानाश्रयविषयत्वे एव भविष्यत इति भावः । तावता कथमेकाश्रयविषयत्वमित्यत आह इह चेति । इह वेदान्तशास्त्र इत्यर्थः । अस्त्वेवं तथापि कथं सम्यग्ज्ञानेनैकाश्रयविषयत्वमित्याशङ्क्य परिशेषादित्याह तत्रानात्मन इति । अभिसम्बन्ध आश्रयाश्रयित्वलक्षणो नास्तीत्यर्थः । तत्र हेतुः तस्य हीति । अज्ञानस्वरूपत्वेऽप्यज्ञानाश्रयत्वमस्तु को विरोध इत्यत आह न हीति । अज्ञानात्मकमज्ञानाश्रयो न भवति । अज्ञानान्तरवच्छुक्तिरूप्यादिवच्चेति भावः । अज्ञानाश्रयत्वप्रयुक्तसंशयविपर्यासाश्रयत्वादर्शनादप्यनात्मनो घटादिवन्नाज्ञानाश्रयत्वमित्याह सम्भवदपीति । अनात्मनो जडस्वभावत्वात्संशयविपर्यासाद्यतिशयानाश्रयत्वमित्यर्थः । अज्ञानसम्यग्ज्ञानयोरेकाधिकरणत्वनियमात्सम्यग्ज्ञानानधिकरणस्यानात्मनो नाज्ञानाधिकरणत्वसम्भव इत्याह न च तत्रेति । अज्ञानकार्यत्वादप्यनात्मनो न तदाश्रयत्वमित्याह अनात्मनश्चेति । अज्ञानस्य स्वभावपर्यालोचनायामपि न तस्याहङ्काराद्यनात्माश्रयत्वं युक्तमित्याह न हीति । कारणतया पूर्वसिद्धमज्ञानं तत एवाज्ञानाल्लब्धात्मकस्याहङ्कारादेस्तदेवाज्ञानमाश्रित्य सेत्स्यतः स्वाश्रयत्वेनाभिमतस्याश्रयि न भवति तेनाश्रयेणाश्रयि न भवितुमर्हति कार्योदयात्प्रागेव तस्याश्रयतयैव सिद्धत्वादित्यर्थः । यद्वा । पूर्वोक्तमेव प्रपञ्चयति न हीति । कारणतया पूर्वसिद्धस्याज्ञानस्य तत्र लब्धात्मलाभत्वादनात्माख्यस्य कारणस्य कार्याश्रयत्वमनुपपन्नमिति । किंचाधेयाकारनिरपेक्षाकारान्तरेणाधारस्याधारता दृष्टा न चेहाज्ञानान-

लब्धात्मलाभस्य सेत्स्यत आश्रयस्याश्रयि भवति । तद-
नपेक्षस्य च तस्य निःस्वभावत्वात् । एतेभ्य एव हेतुभ्यो
नानात्मविषयमज्ञानं सम्भवतीति ग्राह्यम् । एवं ताव-
न्नानात्मनोऽज्ञानित्वं नापि तद्विषयमज्ञानम् । पारिशे-
ष्यादात्मन एवास्त्वज्ञानं तस्याज्ञोऽस्मीत्यनुभवदर्शनात् ।
"सोऽहं भगवो मन्त्रविदेवास्मि नात्मविदि"ति श्रुतेः ।
न चात्मनोऽज्ञानस्वरूपता तस्य चैतन्यमात्रस्वाभाव्या-

---

पेक्षस्यानात्मन आकारान्तरमस्ति येनाज्ञानाश्रयत्वमुपपद्येतेत्याह तदनपे-
क्षस्य चेति । ननु माभूदज्ञानस्यानात्माश्रयो विषयस्तु किं न स्यादित्यत
आह एतेभ्य इति । विषयस्याप्याश्रयवदज्ञानस्वरूपघटकत्वादज्ञानात्म-
कस्य चानात्मनोऽज्ञानवदेव तद्विषयत्वेन घटकत्वायोगात्तमसीव तमो-
न्तरस्य तत्रातिशयत्वाभावादज्ञानं विनापि तदवभासकज्ञानानुदयादेव
तदनवभाससिद्धेरज्ञानकार्यत्वादेव तस्य रूप्यादिवदज्ञाननिवर्त्तकसम्य-
ग्ज्ञानविषयत्वायोगात्पूर्वमेवाश्रयविषयघटिततया सिद्धादज्ञानात्सेत्स्य-
तः पूर्वसिद्धस्य विषयभावायोगात्सम्यग्ज्ञाननिरसनीयाकारातिरिक्ता-
ज्ञानविषयत्वयोग्याकारान्तरासम्भवाच्च नानात्मविषयमज्ञानं सम्भवती-
त्यर्थः । पारिशेष्यादात्माश्रयमात्मविषयं चाज्ञानं सिद्धमित्युपसंहरति
एवं तावदिति । अनुभवसिद्धं चैतदित्याह तस्येति । आगमोऽप्यत्र प्र-
माणमित्याह सोऽहमिति । अनात्मनोऽज्ञानाश्रयविषयत्वयोरभिहित-
दोषाणामात्मन्यसम्भवादप्येवमेवाभ्युपेयमित्याह न चेति । आत्मनश्चेत-
नत्वेनानात्मवदज्ञानस्वरूपत्वाभावादज्ञानाश्रयत्वं सम्भवतीत्यर्थः । अज्ञा-
नजन्योऽतिशयोऽप्यात्मनि सम्भवतीत्याह अतिशयश्चेति । स्वयंप्रकाश-
त्वान्नित्यशुद्धबुद्धाद्वितीयाकारेण प्राप्तप्रकाशस्याप्रकाशत्वं तद्विपरीत-
स्फुरणं च ज्ञानविपरिलोपः सोऽप्यात्मनि सम्भवतीत्यर्थः । तथापि तस्य
कूटस्थत्वादागन्तुकमज्ञाननिवर्त्तकं सम्यग्ज्ञानं नोपपद्यत इत्यत आह ज्ञा-
नप्राप्तेश्चेति । तत्र हेतुः तस्येति । अविद्यातत्कार्यान्तःकरणादिवृत्तिषु

दतिशयश्च सम्भवति ज्ञानविपरिलोपो ज्ञानप्राप्तेश्च सम्भवस्तस्य ज्ञानकारित्वात्। न चाज्ञानकार्यत्वं कूटस्थात्मस्वाभाव्यादज्ञानानपेक्षस्य चात्मनः स्वत एव स्वरूपसिद्धेर्युक्तमात्मन एवाज्ञत्वम्। किंविषयं पुनस्तदात्मनोऽज्ञानम्। आत्मविषयमिति ब्रूमः। नन्वात्मनोऽपि ज्ञानस्वरूपत्वादनन्यत्वाच्च ज्ञानप्रकृतित्वादिभ्यश्च हेतुभ्यो

---

प्रमाणाप्रमाणरूपचैतन्याभासहेतुत्वेन ज्ञानकारित्वादात्मन इत्यर्थः। अनात्मन इवाज्ञानकार्यत्वलक्षणदोषोऽपि नास्तीत्याह न चाज्ञानकार्यत्वमिति। तस्याकार्यत्वमुभयवादिसम्मतमिति भावः। यच्चोक्तं तदनपेक्षस्य तस्य निःस्वभावत्वादिति तदप्यत्र नास्तीत्याह अज्ञानानपेक्षस्य चेति। अज्ञानस्य जडत्वात्तत्साधकोऽजडबोधस्वभाव आत्मा तदन्तर्गताकारनिरपेक्षाकारसिद्ध इत्यर्थः। भवत्वेवमात्मनोऽज्ञानाश्रयत्वं तद्विषयत्वं तु न युक्तं ज्ञानेच्छादीनां लोके भिन्नाश्रयविषयत्वदर्शनात्प्रतीयमानाकारेणाज्ञानं प्रत्याश्रयत्वमप्रतीयमानाकारेण विषयत्वमित्याकारभेदस्यैकस्मिन्नेकरसे वस्तुन्यसम्भवाच्चेत्याक्षिपति किंविषयमिति। समाधत्त आत्मविषयमिति। मामहं जानामि मामहं न जानामीति च ज्ञानाज्ञानयोरेकाश्रयविषयत्वस्यापि लोके दर्शनादहमितिसाधारणाकारेण प्रतीयमानाकारस्याप्यात्मनोऽद्वितीयानन्दाकारेणाप्रतीयमानस्यानुभवसिद्धत्वादहं मनुष्य इति विभ्रमेऽहमिति साधारणाकारेण प्रतीयमानस्य देहव्यतिरिक्तासाधारणस्वभावेनाप्रतीयमानत्वस्य परैरप्यभ्युपेयत्वादज्ञानस्यैकाश्रयविषयतायां न कश्चिद्दोष इति भावः। उक्तमेवार्थं हेत्वन्तरावष्टम्भेनाक्षिपति नन्वात्मनोऽपीति। ज्ञानाज्ञानयोस्तमःप्रकाशयोरिव परस्परविरुद्धस्वभावत्वाज्ज्ञानस्वभावस्यात्मनो नाज्ञानाश्रयत्वं। तदाश्रयत्वे तन्निवर्त्तकत्वायोगात्तथाश्रयाश्रयिभावस्य भेदगर्भत्वादद्वितीये चात्मनि तदयोगादज्ञाननिवर्त्तकप्रमाणज्ञानकारणत्वाच्चात्मनस्तन्निवर्तकपुष्कलकारणवतः सवितुरिवान्धकाराश्रयत्वस्यासम्भवादसङ्गत्वनित्यमुक्तत्वा-

नैवाज्ञानं घटते । घटत एव । कथम् । अज्ञानमात्रनि-

दिभ्यश्च हेतुभ्यो नाज्ञानाश्रयत्वसम्भव इत्यर्थः । समाधत्ते घटत इति । पूर्वोक्तेषु हेतुषु जीवत्सु समाधानं दुर्घटमित्याक्षिपति कथमिति । तत्र ज्ञानस्वभावत्वज्ञानप्रकृतिकत्वादीनां दूषणानां सर्वैरपि समाधातुं शक्यत्वात्तान्युपेक्ष्यानन्यत्वादित्येतत्समाधत्ते अज्ञानमात्रनिमित्तत्वात्तद्विभागस्येति । यद्वा । सर्वेषामपि दूषणानां समाधानत्वेनायमेव ग्रन्थो योजयितुं शक्यते । तथा हि तत्र तावद्यदुक्तं ज्ञानस्वभावत्वादात्मनोऽज्ञानं नोपपद्यते विरोधादिति तत्र किं प्रमाणज्ञानस्वभावत्वं किंवानादिनिधनसाक्षिचैतन्यस्वभावत्वमिति विकल्प्याद्यं प्रत्याह अज्ञानमात्रेति । तस्य प्रमातृप्रमेयप्रमितिलक्षणविभागघटितस्वभावस्य प्रमाणज्ञानस्याज्ञानमात्रनिमित्तत्वेनानादिसिद्धात्मस्वभावत्वासम्भवात् । न हि कल्पितमकल्पितस्य स्वभावः सर्पात्मतेव रज्ज्वा इत्यर्थः । द्वितीयमपि प्रत्याह अज्ञानमात्रेति । साक्षिचैतन्यस्याज्ञानस्य च भास्यभासकत्वेनाविरोधात्साक्षिण्यध्यासलक्षणसम्बन्धमन्तरेण च तद्भास्यत्वायोगात् । भास्यभासकविभागस्योक्तन्यायेनात्मसम्बन्ध्यज्ञानमात्रनिमित्तत्वात् । लोकेऽपि यद्यदधीनसत्ताप्रतीतिकं तत्तस्मिन्नेवाध्यस्तं दृष्टम् । यथा रज्ज्वाः सर्पात्मता रज्ज्वामेवाध्यस्ता तद्वदात्माधीनसत्ताप्रतीतिकमज्ञानमात्मन्येवाध्यस्तमित्यर्थः । यदुक्तमाश्रयाश्रयिभावस्य भेदगर्भत्वादद्वितीये ब्रह्मणि नायमुपपन्न इति तदपि निरस्यति अज्ञानमात्रेति । परमार्थतोऽद्वितीयत्वेऽपि स्वस्मिन्नध्यस्ताज्ञानमात्रनिमित्तत्वादाश्रयाश्रयित्वविभागस्य रज्ज्वाः सर्पात्मतावत्तस्याज्ञानाश्रयत्वाविरोध इत्यर्थः । यदुक्तं ज्ञानप्रकृतित्वादसङ्गत्वान्नित्यमुक्तत्वाच्चात्मनोऽज्ञानमनुपपन्नमिति तदपि निराचष्टे अज्ञानमात्रेति । रज्जुसर्पयोः प्रकृतिविकारभागस्येवाज्ञानात्मनोः प्रकृतिविकारभागस्याज्ञानमात्रनिमित्तत्वाज्ज्ञानप्रकृतित्वेनैवाज्ञानाश्रयत्वमात्मनः सम्भवति । असङ्गत्वनित्यमुक्तत्वादेश्च वास्तवस्वभावस्याज्ञानमात्रशरीरेण सम्बन्धादिविभागेनाविरोधात्तद्घटत एवात्मन्यज्ञानमिति भावः । एवं सर्वविभागानर्थनिदानमज्ञानमतस्तन्निवृत्तये तृतीयाध्याया-

मित्तत्वात्तद्विभागस्य सर्पात्मतेव रज्वाः। तस्मात्तदपनुत्तौ द्वैतानर्थाभावः। तदपनोदश्च वाक्यादेव तत्पदपदार्थाभिज्ञस्य। अतो वाक्यव्याख्यानायाध्याय आरभ्यते। तत्र यथोक्तेन प्रकारेण तत्त्वमस्यादिवाक्योपनिविष्टपदपदार्थयोः कृतान्वयव्यतिरेकः।

यदा ना तत्त्वमस्यादेर्ब्रह्मास्मीत्यवगच्छति।
प्रध्वस्ताहम्ममो नैति तदा गीर्मनसोः सृतिम्॥ १॥

---

रम्भ उपपन्न इत्यभिप्रेत्योपसंहरति तस्मादिति। भवत्वेवं तथापि द्वितीयाध्यायोक्तयुक्तिभिरेव द्वैतस्य मिथ्यात्वावधारणादात्मनश्च तदधिष्ठानस्य सत्यतयाधिगतत्वात्तत एवानर्थद्वैतस्य नित्यनिवृत्त्युपपत्तेः किं वाक्यव्याख्यानेनेति तत्राह तदपनोदश्चेति। युक्तीनां प्रमाणानुग्राहकतया स्वातन्त्र्येणानिश्चायकत्वाद्वाक्यादेव सम्यग्ज्ञानद्वारेण तदपनोद इति भावः। अवधारणेनानुमानादिप्रमाणान्तरं व्यावर्त्तयति। ननु तर्ह्ययमेवाध्याय आरभ्यतां किमतीतेन द्वितीयाध्यायेनेत्यत आह तत्पदेति। तस्मिन्वाक्ये यानि पदानि ये च पदार्थास्तानि प्रसिद्धलक्षणागुणवृत्तिभिस्तांश्चतुर्विधान्वयव्यतिरेकाभ्यामभिजानत एव भवति वाक्यार्थज्ञानमतस्तत्प्रतिपादको द्वितीयोऽध्यायो ऽस्याध्यायस्य हेतुरतोऽनन्तरं हेतुमतोऽस्यारम्भ उपपन्न इति भावः। यद्वा। वाक्यादेव चेत्तदपनोदो वाक्यमेवोच्यतां किं तत्र पदार्थनिरूपणेन वक्ष्यमाणेनेति तत आह तत्पदेति। एवं सप्रयोजनत्वादनवगतार्थत्वाच्चाध्यायारम्भमुपपादितमुपसंहरति अत इति। चिकीर्षितव्याख्यानप्रयोजनप्रदर्शनपरमुत्तरश्लोकमधिकारिविशेषाकाङ्क्षां पूरयन्नवतारयति तत्रेति। यदा नेति। ना पुरुषः प्रध्वस्ताहंममः शोधिततत्त्वंपदार्थो भूत्वा तत्त्वमस्यादिवाक्यादहमस्मि परं ब्रह्मेति वाक्यार्थमवगच्छति तदा गीर्मनसोर्वाङ्मनसयोः सृतिं नैति न प्रतिपद्यते सर्वव्यवहारातीतो भवतीत्यर्थः॥ १॥

यदैव तदर्थे त्वमर्थेऽवैति तदैवावाक्यार्थतां प्रतिपद्यते गीर्मनसोः सृतिं न प्रतिपद्यत इति कुत एतदध्यवसीयते । यस्मात् ।

तत्पदं प्रकृतार्थे स्यात्त्वम्पदं प्रत्यगात्मनि ।
नीलोत्पलवदेताभ्यां दुःख्यनात्मत्ववारणे ॥ २ ॥

एवं कृतान्वयव्यतिरेको वाक्यादेवावाक्यार्थे प्रतिपद्यत इत्युक्तमतस्तद्व्याख्यानाय सूत्रोपन्यासः ।

सामानाधिकरण्यं च विशेषणविशेष्यता ।
लक्ष्यलक्षणसम्बन्धः पदार्थप्रत्यगात्मनाम्॥ ३ ॥

---

उक्तमर्थं कीर्त्तयंस्तद्धेतुत्वेनोत्तरश्लोकमवतारयति यदैवेति । यस्मिन्नेव क्षणे तदर्थं तत्पदस्यार्थमद्वितीयानन्दं ब्रह्मत्वमर्थे त्वंपदस्यार्थे बुद्ध्यादिसाक्षिणि परिशोधितेऽवैति जानाति तत्त्वंपदयोरैक्यं प्रतिपद्यते तदैव तस्मिन्नेव क्षणे देशकालसाधनान्तरनिरपेक्षामवाक्यार्थतां भेदसंसर्गवाक्यार्थविलक्षणामखण्डैकरसतां प्रतिपद्य सर्वव्यवहारातीतो भवतीत्यत्र को हेतुरित्यर्थः। तत्त्वमसिवाक्ये तत्पदं विधित्सितप्रकृताद्वितीयब्रह्मपरं त्वम्पदं चोद्दिश्यमाने प्रत्यगात्मनि वर्त्तते ततश्चैताभ्यां द्वाभ्यामन्योन्यनियम्यनियामकतयावस्थिताभ्यां विधित्सितब्रह्मभावादेव प्रत्यगात्मनि दुःखित्वमनात्मनो बाधितत्वाच्च ब्रह्मणोऽनात्मत्वं च व्यावर्त्तते । यथा नीलमुत्पलमित्युक्तेरुत्पलस्यानीलत्वं नीलस्यानुत्पलत्वं च व्यावर्त्तते न तत्र देशकालसाधनान्तराद्यपेक्षा तद्वदिहापीत्याह तत्पदमिति ॥ २ ॥

लोके गामानय दण्डेनेति भिन्नविभक्तिनिर्दिष्टानामन्वयलक्षणो भेदो वाक्यार्थो नीलमुत्पलमित्यभिन्नविभक्तिनिर्दिष्टानां संसर्गात्मकश्चेति वाक्यार्थो द्विविध एव दृश्यते न तु तदतिरिक्ताखण्डैकरसतालक्षणो वर्त्तते । तत्कथं तदभिप्रायेणावाक्यार्थतां प्रतिपद्यत इत्युच्यत इत्याशङ्क्य तत्प्रतिपादयितुं प्रतिपत्तिसौकर्याय प्रथमं तावदुत्तरश्लोकः सूत्र-

अस्मिन् सूत्र उपन्यस्ते कश्चिच्चोदयति योऽयं वाक्यार्थप्रतिपत्तौ पूर्वाध्यायेनान्वयव्यतिरेकलक्षणो न्यायः सर्वकर्मसन्न्यासपूर्वकोऽभिहितः किमयं विधिपरिप्रापितः किंवा स्वरसत एवात्र पुमान्प्रवर्तत इति। किञ्चातः शृणु। यद्यात्मवस्तुसाक्षात्करणाय विधिपरिप्रापितोऽयं न्यायस्तदावश्यमात्मवस्तुसाक्षात्करणाय व्यावृत्तशुभाशुभकर्मराशिरेकाग्रमना अन्वयव्यतिरेकाभ्यां यथोक्ताभ्यामात्मदर्शनं करोति। अपरिसमाप्यात्मदर्शनं ततः प्रच्यव-

---

स्थानीय उपन्यस्त इत्याह एवमिति। सामानाधिकरण्यं चेति। तत्त्वमस्यादिमहावाक्यस्थपदधर्मः सामानाधिकरण्यं प्रथमं भवति। सति च तस्मिन्त्सामानाधिकरण्ये वाच्यपदार्थयोः परस्परविशेषणविशेष्यभावेनान्वयः स्यात्। सति च तस्मिन्विरोधस्फूर्तौ वाच्यपदार्थयोर्वाक्यतात्पर्यविषयस्य च प्रत्यगात्मनो लक्ष्यलक्षणसम्बन्धः। एवं च यथाक्रमेण पदतदर्थप्रत्यगात्मनां सामानाधिकरण्यं विशेषणविशेष्यता लक्ष्यलक्षणसम्बन्धश्च भवतीत्यर्थः॥ ३॥

नन्वज्ञाननिवृत्तेर्दृष्टफलत्वात्तत्साधनज्ञानस्याविधेयत्वाज्ज्ञानं प्रति च श्रवणादेरन्वयव्यतिरेकसिद्धसाधनत्वाज्ज्ञानार्थितामात्रेण यस्यकस्यचिद्विधिं विनापि श्रवणादौ प्रवृत्त्युपपत्तेः शास्त्रीयस्य विशिष्टाधिकारिणो भावादधिकारिणः प्रमितिजनको वेद इति न्यायाच्च तत्त्वमस्यादिवाक्यस्य न प्रमितिजनकत्वमतस्तद्व्याख्यानाय यः सूत्रोपन्यासो व्यर्थ इत्याशयवान्कश्चित्प्रत्यवतिष्ठत इत्याह अस्मिन्नित्यादिना। वाक्यार्थज्ञानसाधनविषयायाः प्रवृत्तेर्विधिप्रयुक्तत्वे दोषमाह यद्यात्मवस्त्विति। यावदसम्भावनाविपरीतभावनारहितफलपर्यन्तज्ञानोत्पत्तिस्तावदधिकारिणा मुमुक्षुणा ज्ञानसाधनान्यवश्यानुष्ठेयानीत्यर्थः। नन्वनुष्ठानमात्रमेवालं किमिति फलपर्यन्तमनुष्ठानमित्यत आह अपरिसमाप्येति। विध्यतिलङ्घनात्प्रत्यवायी स्यादित्यर्थः। रागप्रयुक्तत्वे कश्चिदपि दोषो

मान आरूढपतितो भवति । यदि पुनर्यदृच्छातः प्रवर्त्तेते तदा न कश्चिद्दोष इति । विधिपरिप्रापित इति ब्रूमो यत आह ।

शमादिसाधनः पश्येदात्मन्यात्मानमञ्जसा ।
अन्वयव्यतिरेकाभ्यां त्यक्त्वा युष्मदशेषतः ॥ ४ ॥
युष्मदर्थे परित्यक्ते पूर्वोक्तैर्हेतुभिः श्रुतिः ।
वीक्षापन्नस्य कोऽस्मीति तत्त्वमित्याह सौहृदात् ॥ ५ ॥

अत्रापि चोदयन्ति सांख्याः । शरीरेन्द्रियमनोबुद्धि-

---

नास्तीत्याह यदि पुनर्यदृच्छात इति । रागत इत्यर्थः । ज्ञानसाधनविषया प्रवृत्तिर्विधिप्रयुक्तैवेति पक्षं स्वीकुर्वन्परिहरति विधीति । विधिं विनापि श्रवणादौ प्रवृत्तिरुपपादितेत्याशङ्क्य तदुत्तरत्वेन श्लोकमवतारयति यत आहेति । शमादीति । "शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्येदि"त्यादिवाक्ये ज्ञानस्य विधेयत्वाद्यत्पश्येत्तच्छान्त्यादिगुणयुक्तो भूत्वेति ज्ञानसाधने विधेः पर्यवसाना- "च्छ्रोतव्यो मन्तव्य" इति च विधानाच्छ्रवणादेर्दृष्टोपायत्वेऽपि नियमादृष्टविशिष्टतया ज्ञानसाधनत्वस्यावश्याभ्युपेयत्वादेवंविशिष्टाधिकारिणः सम्भवान्नोक्तदोष इत्यर्थः । केनोपायेनेत्यत आह अन्वयव्यतिरेकाभ्यामिति ॥ ४ ॥

ननु किमन्वयव्यतिरेकाभ्यामेव वाक्यनिरपेक्षाभ्यामात्मदर्शनमिति नेत्याह युष्मदर्थेति । युष्मदर्थेऽहंकर्त्तुरिदमंशप्रभृतिदेहेन्द्रियादिपर्यन्ते पूर्वाध्यायोक्तहेतुभिरनात्मकतया परित्यक्ते सत्यद्वितीयपरमानन्दस्वरूपस्यात्मनोऽनाद्यज्ञानव्यवहितत्वात्कोऽहमित्यनिर्धारितासाधारणात्मस्वभावतया पर्यालोचनासमाकुलस्याधिकारिणो मातृकल्पा श्रुतिस्त्वं तदेवासीति सौहृदादज्ञाननिरसनायाहेत्यर्थः ॥ ५ ॥

आत्मानात्मविवेके सत्यप्यज्ञाननिवृत्तये वाक्यं प्रवर्त्तेत इत्युक्तम् ।

ष्वनात्मस्वात्मेति निःसन्धिबन्धनं मिथ्याज्ञानमज्ञानं तन्निबन्धनो ह्यात्मनोऽनेकार्थसम्बन्धस्तस्य चान्वयव्यतिरेकाभ्यामेव निरस्तत्वान्निर्विषयं तत्त्वमस्यादिवाक्यं प्राप्तम् । तस्माद्वाक्यस्य चैष महिमा योऽयमात्मानात्मनोर्विभाग इति तन्निराकरणायेदमुच्यते ।

भेदसंविदिदं ज्ञानं भेदाभावश्च साक्षिणि ।
कार्यमेतदविद्याया ज्ञात्मना त्याजयेद्वचः ॥ ६ ॥

ज्ञात्मना त्याजयेद्वच इत्युपश्रुत्याह कश्चित् । मिथ्याज्ञानव्यतिरेकेणात्मानवबोधस्याभावात्किं वाक्येन निवर्त्यते ।

---

तस्मिन्नर्थे सांख्यानां चोद्यमुत्थापयति अत्रेति । निःसन्धिबन्धनमिति । अहमित्यैक्यप्रातिपदिकार्थत्वेन ज्ञानं तदेव मिथ्याविषयत्वान्मिथ्याज्ञानं तदेव चाज्ञानं नान्यदनाद्यस्तीत्यर्थः । अनर्थहेतुतया प्रसिद्धमज्ञानमन्यदस्तीत्यत आह तन्निबन्धन इति । अस्त्वेवं ततः किमित्यत आह तस्य चेति । अतो निर्विषयत्वपरिहारायान्वयव्यतिरेकाभ्यां सहितस्य मिथ्याज्ञाननिरसनेनात्मानात्मविवेककरणं वाक्यस्य कृत्यं नानाद्यज्ञाननिरसनमित्याह तस्मादिति । इदानीमेतदुत्तरत्वेन श्लोकमवतारयति तन्निराकरणायेति । यदिदमात्मानात्मविवेकविज्ञानं तद्भेदसंविद्भेदप्रमितिफलम् । एकधैवानुद्रष्टव्यमित्यादिना च साक्षिणि वाक्यतात्पर्यविषये भेदाभावः श्रूयते तस्मादिदं विवेकविज्ञानं भेदशून्ये वस्तुनि भेदज्ञानत्वादविद्याकार्यं भ्रमरूपं ततश्च तन्न वाक्यजन्यं तस्माद्वाक्यं ज्ञात्मनाद्वितीयबोधाकारवृत्तिद्वारेण ज्ञात्मतावन्मात्रतया सकार्यमेतदज्ञानं त्याजयेन्निवर्त्तयतीत्येतदाह भेदसंविदिति ॥ ६ ॥

अनाद्यग्रहणव्यतिरेकेण भावरूपानाद्यविद्या न विद्यत इति चोद्यान्तरमुत्थापयति ज्ञात्मनेति । अनर्थहेतुतया निवर्त्तनीयत्वमप्यात्माज्ञा-

**अज्ञानं हि नाम ज्ञानाभावस्तस्य चावस्तुस्वाभाव्यात्कुतः संसारकारणत्वं न ह्यसतः सज्जन्मेष्यते "कुतस्तु खलु सोम्यैवं स्यादिति कथमसतः सज्जायेते"ति श्रुतेरिति । अत्रोच्यते ।**

---

नस्यासिद्धमित्याह तस्य चेति । एतदुत्तरत्वेन श्लोकमवतारयति अत्रोच्यत इति । धर्मिग्रहणप्रतियोगिस्मरणलक्षणबुद्धिजन्मनः प्रागेव सुषुप्त्यवस्थायां सर्वार्थविषयमज्ञानमनुभूयत एतावन्तं कालं न किंचिदज्ञासिषमित्युत्थितस्य परामर्शदर्शनादननुभूते च तदयोगाद्धर्मिप्रतियोगिज्ञानं विना ज्ञानाभावस्यानुभवितुमशक्यत्वादुत्थितस्य च ज्ञानाभावानुमानस्य लिङ्गाभावात्स्मरणाभावस्य चानैकान्तिकत्वेनालिङ्गत्वाद्भावरूपमज्ञानमित्यर्थः । तर्ह्यज्ञानस्य सर्वार्थविषयत्वाङ्गीकारादात्मैकविषयत्वं पूर्वोक्तमपगतमित्यत आह एकेनैवेति । नामरूपात्मकप्रपञ्चलक्षणः सर्वोऽर्थः प्रलय इव सुषुप्तावज्ञातसन्मात्रावशेषं प्रलीयते ततश्च प्रबोधसमये पुनरुद्भवतीति हि वेदान्तसिद्धान्तः । "यदा सुषुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन्प्राण एवैकधा भवति तदैनं वाक्सर्वैर्नामभिः सहाप्येती"त्यारभ्य "स यदा प्रतिबुध्यते यथाग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः सर्वे प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोका" इति स्वापप्रबोधयोः प्रलयप्रभवश्रवणात्कल्पितस्य च द्वैतस्य शुक्तिरजतादेरिव प्रतिभासमात्रशरीरस्य प्रतिभासदशायां स्वकल्पनाधिष्ठानसन्मात्रातिरेकेण स्वरूपेणावस्थानासम्भवाच्च । तथा च सुषुप्तिदशायामेकेनैव सता सर्वस्य सत्त्वं स एव च सन्ननादेरज्ञानस्य विषयाकाङ्क्षस्वभावस्य विषयस्ततोऽन्यस्य तत्कल्पितस्य तद्विषयत्वानुपपत्तेस्ततः सन्नेव सुषुप्तावज्ञात इत्यात्मैकविषयत्वमज्ञानस्य नापगतमित्यर्थः । यद्वा । जाग्रद्दशायामपि सर्वोऽर्थो घटपटादिलक्षणः स्वबुद्धिजन्मनः प्रागज्ञात इत्यर्थस्य संप्रतिपन्नत्वादर्थस्य च ज्ञातत्वे पश्चात्तद्विषयज्ञानोदयायोगाज्ज्ञानानुदयसद्भावे चार्थस्य व्यवहार्यतासम्भवात्सामान्याकारेण ज्ञातत्वेऽप्यज्ञाताकारस्य ज्ञातत्वायोगादज्ञाता-

अज्ञात एव सर्वोऽर्थः प्राग्यतो बुद्धिजन्मनः ।
एकेनैव सता संश्च सन्नज्ञातो भवेत्ततः ॥ ७ ॥

सन्नज्ञातो भवेत्तत इत्युक्तमधस्तनेन श्लोकेन कोऽसौ सन्नज्ञात इत्यपेक्षायां तत्स्वरूपप्रतिपादनायाह ।

प्रमित्सायां य आभाति स्वयं मातृप्रमाणयोः ।
स्वमहिम्ना च यः सिद्धः सोऽज्ञातार्थोऽवसीयताम् ८

अत्र केचिदाहुः । यत्किञ्चिदिह वाक्यं लौकिकं वैदिकं वा तत्सर्वं संसर्गात्मकमेव वाक्यार्थं गमयति । अतस्तत्त्वमस्यादिवाक्येभ्यः संसर्गात्मकमहं ब्रह्मेति विज्ञाय तावन्निदिध्यासीत यावदवाक्यार्थात्मकः प्रत्यगात्मविषयो

---

कारस्य चानुवादायोगाज्ज्ञानाभावविलक्षणभावरूपाज्ञानेनावृत इत्याह अज्ञात एवेति । ननु सर्वस्याज्ञातत्वे तद्विषयप्रमाणेन विना तन्निवृत्त्यसम्भवादात्मवत्प्रमेयत्वं सर्वस्य प्रसज्यत इत्याशङ्क्य सर्वविशेषानुगतसद्भावस्यैवाज्ञातत्वात्प्रमेयत्वमपि तस्यैवेत्याह एकेनैवेति ॥ ७ ॥

भवत्वेवंभूतमज्ञानं तस्य कथं प्रतीतिरित्यत आह प्रमित्सायामिति । पदार्थानां प्रमित्सादशायां यः प्रमातृप्रमाणयोः प्रमातरि प्रमाणे च स्फुरति प्रमाता स्फुरति प्रमाणमिति स्फुरणात्मना योऽवभासते तदभावे च तदभावसाक्षितया सुषुप्त्यादौ स्वभावादेव स्फुरति सोऽयमज्ञातोऽर्थः । तेन च स्वतःसिद्धसाक्षिचैतन्यसिद्धमज्ञानं प्रमाणनिवर्त्यस्य प्रमाणसिद्धत्वानुपपत्तेरित्यर्थः ॥ ८ ॥

तत्त्वमस्यादिवाक्यादवाक्यार्थतां प्रतिपद्यत इति यदुक्तं तदयुक्तमुपायान्तरादवाक्यार्थप्रतिपत्तेरित्याक्षिपति अत्र केचिदाहुरिति । शाब्दस्य संसर्गबुद्धिजनकत्वस्वाभाव्यान्न तेनावाक्यार्थप्रतिपत्तिरित्यर्थः । कुतस्तर्ह्यवाक्यार्थप्रतिपत्तिरित्यत आह अत इति । शाब्दज्ञानाभ्यासजनिततृतीयज्ञानादेवावाक्यार्थप्रतिपत्तिरित्यर्थः । वाक्यजं ज्ञानं मोक्ष-

ऽवबोधोऽहं ब्रह्मेति समभिजायते । तस्मादेव विज्ञाना-त्कैवल्यमाप्नोतीति तन्निराकरणायेदमुच्यते ।

सामानाधिकरण्यादेर्घटेतरखयोरिव ।
व्यावृत्तेः स्यादवाक्यार्थः साक्षान्नस्तत्त्वमर्थयोः ॥ ९ ॥

कुतोऽवाक्यार्थोऽवसीयत इति चेत्तत्प्रतिपत्त्यर्थं विशेषणविशेष्ययोः सामर्थ्योक्तिः ।

निर्दुःखित्वं त्वमर्थस्य तदर्थेन विशेषणात् ।
प्रत्यक्ताच तदर्थस्य त्वम्पदेनास्य सन्निधेः ॥ १० ॥

---

साधनमपि न भवतीत्याह तस्मादिति । सामानाधिकरण्यादेरिति । यद्यपि नीलं महत्सुगन्ध्युत्पलमित्यादौ पदानां सामानाधिकरण्यस्य पदार्थानामन्योन्यविशेषणविशेष्यभावस्य च संसर्गात्मकवाक्यार्थपर्यवसायित्वं दृश्यते तथा घटाकाशो महाकाश इत्यादौ पदसामानाधिकरण्यस्य पदार्थानां विशेषणविशेष्यभावस्य च पदार्थवाक्यार्थयोर्लक्ष्यलक्षणभावेनाखण्डार्थपर्यवसायित्वं न दृश्यते तथापि घटविशिष्टाकाशतदनवच्छिन्नाकाशयोः परस्परसंसर्गे विरोधादविरोधाय घटाकाशे परिच्छिन्नत्वांशं महाकाशे च महत्त्वधर्मं व्यावर्त्त्य लक्षणयाकाशस्वरूपमात्रपर्यवसायित्वं तत्र पदानां दृष्टमेवं तत्त्वमस्यादिवाक्यगतपदसामानाधिकरण्यात्तत्त्वमर्थयोर्विशेषणविशेष्यभावाच्च संसर्गप्राप्तौ विरोधात्त्वमर्थगतदुःखित्वस्य तदर्थगतपारोक्ष्यस्य च व्यावृत्तेरखण्डैकरसस्य वस्तुनो वाक्यप्रतिपिपादयिषितस्य पदाभ्यां लक्षणाद्वाक्यादेवासाक्मवाक्यार्थप्रतिपत्तिसम्भवान्न तत्प्रतिपत्तेर्निदिध्यासनापेक्षेत्यर्थः ॥ ९ ॥

नन्वेकपदस्य वाक्यस्याभावाद्बहूनां पदानामेकार्थत्वे पौनरुक्त्यप्रसङ्गादपुनरुक्तार्थानामखण्डार्थपर्यवसायित्वानुपपत्तेः संसर्ग एव वाक्यार्थ इत्याक्षिपति कुत इति । अन्यव्यावृत्तिमुखेनैकार्थपर्यवसायिनां पदानां लक्ष्यार्थाभेदेऽपि व्यवच्छेद्यभेदादपुनरुक्तार्थसम्भवात्सम्भवत्येव वाक्यादवाक्यार्थप्रतिपत्तिरित्युत्तरश्लोकेन दर्शयतीत्याह तत्प्रतिपत्त्यर्थमिति । निर्दुःखित्वमिति । त्वमर्थस्य चैतन्यस्य प्रसिद्धत्वादुद्दिश्यमानस्य वि-

उक्तं सामानाधिकरण्यं विशेषणविशेष्यभावश्च संक्षेपतो ऽथ लक्ष्यलक्षणव्याख्यानायाह ।

कूटस्थबोधप्रत्यक्त्वमनिमित्तं सदात्मनः ।
बोधृताहंतयोर्हेतुस्ताभ्यां तेनोपलक्ष्यते ॥ ११ ॥

बुद्धेः कूटस्थबोधप्रत्यक्त्वनिमित्ते बोधृताप्रत्यक्त्वे ये त्वसाधारणे तयोर्विशेषवचनम् ।

---

धीयमानतत्पदार्थेनाद्वयानन्दलक्षणेन विशेषणात्तद्विरुद्धदुःखित्वं निरस्यते तद्वत्परोक्षत्वेन प्रतीयमानस्य तत्पदार्थस्य विशेष्यवाचिना त्वंपदेन सन्निधेस्तत्पदपारोक्ष्यव्यावृत्त्या प्रत्यक्ता भवति तत्र कुतः पौनरुक्त्यं कुतश्चाखण्डार्थाप्रतिपत्तिरित्यर्थः । यद्वा । त्वम्पदेन त्वंशब्दः पदं यस्य स त्वम्पदस्तेन त्वमर्थेन विशेषणादित्यर्थः ॥ १० ॥

सामानाधिकरण्यं चेत्यस्मिन्सूत्रश्लोके संक्षेपतस्तावत्पूर्वार्धो व्याख्यातः । अथेदानीमुत्तरार्धव्याख्यानं क्रियत इत्याह उक्तमिति । उत्तरत्रापि सामानाधिकरण्यविशेषणविशेष्ययोर्विशेषो व्याख्यात इत्यभिप्रेत्य संक्षेपत इत्युक्तम् । कूटस्थेति । गिरिशृङ्गवन्निश्चलतया तिष्ठतीति कूटस्थः । कूटस्थश्चासौ बोधश्चेति कूटस्थबोधः । स चासौ प्रत्यक्चेति कूटस्थबोधप्रत्यक् तस्य भावस्तत्त्वं । तदिदं कूटस्थबोधप्रत्यक्त्वमात्मनो लक्ष्यमनिमित्तं निर्हेतुकं स्वाभाविकमत एवात्मनः सदास्तीत्यर्थः। यद्वा । सदात्मनः परमार्थस्यास्तीत्यर्थः । भवत्वेवमेतावता प्रकृते लक्ष्यलक्षणव्याख्याने किमायातमित्यत आह बोद्धृतेति । प्राकृताया बुद्धेः स्वभावतो बोधशून्यायाः कूटस्थबोधो बोद्धृताया हेतुर्वह्निरिवायसोदग्धृतायास्तथात्मनः प्रत्यक्त्वं च पराचीनाया बुद्धेरहन्तायाः पराग्व्यावृत्तरूपताया हेतुः । तेन हेतुहेतुमल्लक्षणेन सम्बन्धेन बुद्धिगतबोद्धृताहन्ताभ्यामात्मा लक्ष्यते । तदेवंबुद्धिविशिष्टस्य त्वम्पदवाच्यस्य लक्षणत्वं केवलस्य लक्ष्यत्वं चोपपन्नमित्यर्थः ॥ ११ ॥

ननु बुद्धेर्बोद्धृताप्रत्यक्त्वे यदि प्रत्यक्चैतन्यगतबोद्धृताप्रत्यक्त्वनिमित्ते

**बोद्धृताकर्तृताबुद्धेः कर्मता स्यादहंतया ।**
**तयोरैक्यं यथा बुद्धौ पूर्वयोरेवमात्मनि ॥ १२ ॥**

**यथा बुद्धौ पूर्वयोरेवमात्मनीत्यतिदेशेन बुद्धिसाधर्म्यविधानान्नानात्वप्रसक्तौ तदपवादार्थमाह ।**

**धर्मधर्मित्वभेदोऽस्याः सोऽपि नैवात्मनो यतः ।**
**प्रत्यग्ज्योतिरतोऽभिन्नं भेदहेतोरसम्भवात् ॥ १३ ॥**

**भेदहेत्वसम्भवं दर्शयन्नाह ।**

---

स्यातां तर्हि बुद्धिगतबोद्धृत्वप्रत्यक्त्वयोरात्मगतबोद्धृत्वप्रत्यक्त्वाभ्यां विशेषो वाच्यः । अन्यथा हेतुहेतुमद्भावायोगादित्याशङ्क्य बुद्धेरसाधारणे ये बोद्धृत्वप्रत्यक्त्वे तयोर्विशेषमाह बुद्धेरिति । बोद्धृतेति । बुद्धेर्बोद्धृता नाम विविधविषयाकारविज्ञानपरिणामकर्तृत्वं न त्वात्मवत्कूटस्थबोधरूपता । तस्याः प्रत्यक्ता त्वहंतयाहंरूपेण व्यवधानेन चैतन्यं प्रति कर्मता स्यान्न त्वात्मन इवाशेषविशेषव्यावृत्तं निरुपचरितं प्रत्यक्त्वं कतिपयदेहेन्द्रियादिविषयापेक्षया तस्याः प्रत्यक्त्वादित्यर्थः । तर्हि बुद्धिगतयोर्बोद्धृताप्रत्यक्त्वयोरत्यन्तभेदवदेवमात्मनीत्याशङ्क्य नेत्याह तयोरिति । बुद्धेरपीह बोद्धृतैव प्रत्यक्त्वं प्रतियोगिनोर्बोध्याकारबाह्याकारयोर्भेदाद्भिन्नवद्व्यपदिश्यते । तद्वदात्मन्यपि हि पूर्वयोर्बुद्धिगतबोद्धृत्वादिहेत्वोः कूटस्थबोधप्रत्यक्त्वयोर्न वास्तवभेद इत्यर्थः ॥ १२ ॥

यथा बुद्धेर्बोद्धृताप्रत्यक्त्वे एवं कूटस्थबोधप्रत्यक्त्वयोः परस्परमात्मनीत्यतिदेशादात्मा धर्मी ते च धर्माविति भेदशङ्कायां तन्निरासायोत्तरश्लोक इत्याह यथा बुद्धाविति । धर्मधर्मित्वभेदो वेद्याया बुद्धेरेव प्रयुज्यते । आत्मनस्त्ववेद्यस्य सिद्धान्तैकदेशिभिरभ्युपगतत्वेन सम्भावितोऽपि स भेदो न सम्भवतीति यतोऽतः प्रत्यग्ज्योतिरेकरसं भेदज्ञानसामग्र्यभावादित्यर्थः ॥ १३ ॥

हेत्वसिद्धिमाशङ्क्याह भेदेति । बोधप्रत्यक्त्वयोराकारभेदानुपलम्भात्तयोरन्योन्यव्यभिचारादर्शनाच्च भेदहेतुर्न सम्भवतीत्यर्थः । अत्र वैधर्म्य-

न कस्याञ्चिदवस्थायां बोधप्रत्यक्त्वयोर्भिदा ।
व्यभिचारोऽथवा दृष्टो यथाहंतद्विदोः सदा ॥ १४ ॥

यस्मादज्ञानोपादानाया एव बुद्धेर्भेदो नात्मनस्तस्मादेतत्सिद्धम् ।

कूटस्थबोधतोऽद्वैतं साक्षात्त्वं प्रत्यगात्मनः ।
कूटस्थबोधाद्बोद्ध्री धीः स्वतो हीयं विनश्वरी ॥ १५ ॥

अथाधुना प्रकृतस्यैव परिणामिनः कूटस्थस्य च लक्षणमुच्यते ।

विशेषं कञ्चिदाश्रित्य यत्स्वरूपं प्रतीयते ।
प्रत्यभिज्ञाप्रमाणेन परिणामी स देहवत् ॥ १६ ॥

---

दृष्टान्तमाह यथाहंतद्विदोरिति । यथाहङ्कारतत्साक्षिणोर्जडाजडत्वेन भास्यभासकत्वेन भेदो यथा च सुषुप्त्यादौ साक्षिणि विद्यमानेऽप्यहङ्कारस्य व्यभिचारस्तथा न बोधप्रत्यक्त्वयोरित्यर्थः ॥ १४ ॥

उत्तरश्लोकेन फलितं कथयतीत्याह यस्मादिति । प्रत्यगात्मनः कूटस्थबोधस्वभावात्सर्वधीष्वेकत्वं सर्वत्रापरोक्षस्वभावत्वं च सिद्धमित्यर्थः । यद्वा । साक्षात्त्वमद्वितीयत्वं द्वितीयशून्यत्वं सिद्धं कूटस्थबोधत्वेन द्वितीयसम्बन्धायोग्यत्वादित्यर्थः । ननु बुद्धेर्बोद्धृत्वेऽपि द्वैतसम्बन्धवदात्मनोऽपि द्वैतसम्बन्धः किं न स्यादित्याशङ्क्य मैवं तस्याः स्वतोबोद्धृताभावादित्याह कूटस्थबोधादिति । बुद्धेर्बोद्धृत्वं कूटस्थबोधप्रसादादेव न स्वत इत्यर्थः । कुत एतदित्याह स्वतो हीति । अनित्यत्वान्न नित्यबोधात्मकत्वमित्यर्थः ॥ १५ ॥

एवं परिणामिनाहङ्कारेण कूटस्थात्मा लक्ष्यत इत्युक्तं तयोर्लक्षणजिज्ञासायां तदिदानीमुच्यत इत्याह अथाधुनेति । तत्र तावत्परिणामिनो लक्षणमाह विशेषमिति । घटं जानामि पटं जानामि सुख्यहं दुःख्यहमिति विशेषवत्त्वेऽपि य एवाहं दुःखी स एवाहमिदानीं सुखीति प्रत्य-

सामान्याच्च विशेषाच्च स्वमहिम्नैव यो भवेत् ।
व्युत्थायाप्यविकारी स्यात्कुम्भाकाशादिवत्तु सः १७

आत्मनो बुद्धेश्च बोधप्रत्यगात्मत्वमभिहितं तयोरसाधारणलक्षणाभिधानार्थमाह ।

बुद्धेर्यत्प्रत्यगात्मत्वं तत्स्याद्देहाद्युपाश्रयात् ।
आत्मनस्तु स्वरूपं तन्नभसः सुषिता यथा ॥ १८ ॥
बोद्धृत्वं तद्वदेवास्याः प्रत्ययोत्पत्तिहेतुतः ।
आत्मनस्तु स्वरूपं तत्तिष्ठन्तीव महीभृतः ॥ १९ ॥

---

भिन्नया यदेकत्वेन प्रतीयते बाल्ययौवनावस्थाभेदेऽपि तदनुगतदेहवदनुवृत्तः स परिणामीत्यर्थः ॥ १६ ॥

कूटस्थस्य लक्षणं निर्दिशति सामान्याच्चेति । अनुवृत्तव्यावृत्तसाक्षित्वादहमहमित्यनुवृत्ताकारादहं सुख्यहं दुःखीति व्यावृत्ताकाराच्च यः स्वमहिम्ना स्वभावबलाद्व्युत्थायावस्थितः। यद्वा । तस्माद्व्युत्थाय स्वमहिम्नैव स्वप्रकाशतयैव यः प्रतीयते स कूटस्थ इत्यर्थः। अत्र दृष्टान्तः कुम्भाकाशादिवदिति। यथा कुम्भाद्यवच्छिन्नत्वेनावभासमानोऽप्याकाशः कुम्भादिविकारैर्विकारवान्न भवति स्वभावबलात्तेभ्यो व्युत्थाय व्यवस्थितस्तद्वदित्यर्थः ॥ १७ ॥

एवं लक्ष्यलक्षणयोर्बुद्ध्यात्मनोर्लक्षणमभिहितमधुना तयोरसाधारणे ये रूपे उपदिष्टे बोधप्रत्यगात्मत्वे तयोर्विशेषतो लक्षणाभिधानायोत्तरश्लोक इत्याह आत्मन इति । तत्र तावद्बुद्ध्यात्मनोः प्रत्यक्त्वे विशेषमाह बुद्धेरिति । बुद्धेः प्रत्यक्त्वं देहाद्यपेक्षं "य आत्मा सर्वान्तर" इति श्रुतेरात्मनः प्रत्यक्त्वं स्वाभाविकमाकाशस्य सुषिरत्ववदित्यर्थः ॥ १८ ॥

इदानीं तयोर्बोद्धृत्वे विशेषमाह बोद्धृत्वमिति । बुद्धेर्बोद्धृत्वं बोधकर्तृत्वोपाधिकम् । आत्मनस्तु स्वभाव एव नान्योपाधिकमित्यर्थः । अत्र दृष्टान्तः तिष्ठन्तीव महीभृत इति । जङ्गमेषु प्राप्तगतिनिवृत्त्यपेक्षया ति-

तयोः कूटस्थपरिणामिनोरात्मानवबोध एव सम्बन्ध-हेतुर्न पुनर्वास्तवः कश्चिदपि सम्बन्ध उपपद्यत इत्याह ।

सम्यक्संशयमिथ्यात्वैर्धीरेवेयं विभज्यते ।
हानोपादानतामीषां मोहादध्यस्यते दृशौ ॥ २० ॥

कुतः कूटस्थात्मसिद्धिरिति चेद्यतः ।

न हानं हानमात्रेण नोदयोऽपीयता यतः ।
तत्सिद्धिः स्यात्तु तद्धीने हानादानविधर्मके ॥ २१ ॥

---

ष्ठतेः प्रयोगो न तथा तिष्ठन्ति महीभृत इति किन्तु स्वभावसिद्धाचलत्वविवक्षया तद्वदित्यर्थः ॥ १९ ॥

ननु लक्ष्यलक्षणयोरात्माहङ्कारयोः सम्बन्धोऽस्ति वा न वा । अस्ति चेदात्मनः सविशेषत्वं नास्ति चेन्न लक्ष्यलक्षणभाव इत्याशङ्क्य मैवमाध्यासिकसम्बन्धाभ्युपगमेन दोषद्वयपरिहारादित्याह तयोरिति । सम्यगिति । सम्यग्धीः संशयधीर्मिथ्याधीरित्येवमादिभिर्धर्मैर्धीरेव विभज्यते विशेष्यतेऽतस्तेषां धीधर्माणामेव हानोपादानता सदसत्त्वं स्यात्तत्साक्षिण्यात्मनि मोहादनाद्यज्ञानवशादारोप्यते ततो न वस्तुतः सविशेषत्वं नापि सम्बन्धाभावेनात्मनो लक्ष्यत्वाद्यभाव इत्यर्थः ॥ २० ॥

बुद्ध्युपाधिसम्बन्धमन्तरेणात्मनोऽपि बोद्धृत्वाद्यदर्शनात्कूटस्थत्वं न सिध्यतीति शङ्कोत्तरत्वेन श्लोकमवतारयति कुत इति । बुद्धितद्वृत्तीनां हानमभावस्तत्तावन्न हानमात्रेण सिद्ध्यति तदुदयस्तत्सद्भावः सोऽपीयतासद्भावमात्रेण न सिध्यति यतस्तयोः सिद्धिस्तद्धीने बुद्धितद्वृत्तिरहिते हानोपादानधर्मशून्ये साक्षिण्यध्यस्ततया तच्चैतन्याभासोदयात्तद्गतविकारमन्तरेण भवति ततो न कूटस्थत्वव्याहतिरित्यर्थः । अथवा यत्सिद्धं तत्प्रमाणेनैव सिद्धं ततः स्वप्रकाशत्वं नात्मनः सम्भवतीति शङ्कोत्तरत्वेन श्लोकमवतारयति कुत इति । हानोपादानादीनां जडत्वेन स्वयं सेद्धुमशक्यत्वाच्चैतत्स्वभावानालिङ्गितस्वयंप्रकाशात्मनिमित्तैव तेषां सिद्धिरिति स्वयंप्रकाशत्वमात्मनः सम्भवतीत्यर्थः ॥ २१ ॥

एवम् ।

आगमापायिहेतुभ्यां धूत्वा सर्वाननात्मनः ।
ततस्तत्त्वमसीत्येतद्धन्त्यस्मदि निजं तमः ॥ २२ ॥

इत्यादि पुनःपुनरुच्यते ग्रन्थलाघवाद्बुद्धिलाघवं प्रयोजकमिति । तत्र यद्यपि तत्त्वमस्यादिवाक्यादुपादित्सिताद्वितीयात्मार्थवत्पारोक्ष्यसद्वितीयार्थः प्रतीयते तथापि तु नैवासावर्थः श्रुत्या तात्पर्येण प्रतिपिपादयिषितः प्रागप्येतस्य प्रतीतत्वादितीममर्थमाह ।

तदित्येतत्पदं लोके बह्वर्थप्रतिपादकम् ।
अपरित्यज्य पारोक्ष्यमभिधानोत्थमेव तत् ॥ २३ ॥

---

ततो वाक्यमेवान्वयव्यतिरेकसहकृतमज्ञाननिवर्त्तकं नत्वन्वयव्यतिरेकावेवेत्युक्तमर्थमुपसंहरति एवमिति । तत्त्वमसीत्येतद्वाक्यं पूर्वमन्वयव्यतिरेकाभ्यामात्मानात्मविवेकं कृत्वाप्यवस्थितस्य पश्चात्सकलसंसारस्य कारणमज्ञानं निवर्त्तयतीत्यर्थः ॥ २२ ॥

यदा ना तत्त्वमस्यादेर्ज्ञात्मना त्याजयेद्वच इत्यादिना पूर्वमप्यनेकधैतदुक्तमतः पुनरुक्तिः स्यादित्याशङ्क्याह इत्यादीति । अत्यन्तसूक्ष्मत्वेन बुद्धावारोपयितुमशक्यार्थस्य युगपदेव बहुना ग्रन्थेन प्रतिपादने बुद्धिगौरवं भवति लघुना ग्रन्थेन बहुशः प्रतिपादने बुद्धिलाघवं बुद्धिसौकर्यं भवतीत्येतत्प्रयोजकं पुनः पुनः प्रतिपादनं न दोषायेत्यर्थः । भवत्वेवमुत्तरग्रन्थेन किं विव्रियत इत्यत आह तत्र यद्यपीति । तत्त्वमस्यादिसामानाधिकरण्यं निमित्तीकृत्य पदद्वयेन लक्षणावृत्त्योपपादयितुमिष्टप्रत्यगद्वयपदार्थवन्मुख्यया वृत्त्या प्रतीयमानपारोक्ष्यसद्वितीयत्वयोरपि वाक्यप्रमेयत्वमाशङ्क्य प्रतिपिपादयिषितार्थविरोधात्तत्प्रतिपादने पुरुषार्थाभावाद्वाक्यबोधादर्वागपि प्रतीयमानत्वाच्च न तस्य वाक्यप्रमेयत्वमित्युत्तरश्लोकाभ्यां प्रतिपाद्यत इत्यर्थः । तदित्येतत्पदमिति । तदित्येतत्पदं व्य-

त्वमित्यपि पदं तद्वत्साक्षान्मात्रर्थवाचि तु ।
संसारितामसन्त्यज्य सापि स्यादभिधानजा ॥ २४ ॥

विरुद्धोद्देशनत्वाच्च पारोक्ष्यदुःखित्वयोरविवक्षितत्वमित्याह ।

उद्दिश्यमानं वाक्यस्थं नोद्देशनगुणान्वितम् ।
आकाङ्क्षितपदार्थेन संसर्गं प्रतिपद्यते ॥ २५ ॥

---

वहितदेशकालत्वाद्युपाधिकं पारोक्ष्यमपरित्यज्यानुगतसामान्यादेरभावाद्बहूनामर्थानां पारोक्ष्यतया प्रतिपत्त्युपाधौ प्रतिपादकं लोके दृष्टम् । तस्मात्पारोक्ष्यमभिधानोत्थमेव शब्दादापाततः प्रतीयते न च वस्तुसंस्पर्शि भवति नापि प्रतिपिपादयिषितम् ॥ २३ ॥

तथा तत्पदवत्त्वमित्यपि पदं स्वप्रवृत्तेः प्रागेव शब्दात्सिद्धां संसारितामसंत्यज्य साक्षान्मात्रर्थवाचि भवत्यव्यवहिततया नित्यमपरोक्षतास्वभावमात्रे श्रोतरि बुद्धिमुत्पादयति । अतः सापि संसारिता अभिधानजा आपाततः शब्दोत्थानवस्तुसंस्पर्शिनी नापि शब्दप्रतिपाद्या तत्प्रतिपत्तेः प्रागेव सिद्धत्वात्तत्प्रतिपादने पुरुषार्थाभावात्प्रतिपिपादयिषितवाक्यार्थविरोधाच्चेत्यर्थः ॥ २४ ॥

इतश्च पारोक्ष्यसंसारित्वयोरविवक्षितत्वमित्याह विरुद्धेति । उद्देशनं प्रसिद्धरूपनिर्देशनं विरुद्धमुद्देशनमनयोरिति विरुद्धोद्देशनौ पदार्थौ तयोर्भावस्तत्त्वं तस्मादपि तद्गतयोर्विरुद्धरूपयोरविवक्षितत्वमुत्तरश्लोकेनोच्यत इत्यर्थः । उद्दिश्यमानमिति । तत्त्वमसिवाक्यगतमुद्दिश्यमानं त्वंपदार्थात्मकं वस्तूद्देशनगुणेनोद्देशनदशायां प्रतीयमानेन संसारित्वगुणेनान्वितं विशिष्टमाकाङ्क्षितपदार्थेन विधित्सितेन सकलसंसाररहितेन संसर्गमन्वयं न प्रतिपद्यते । एवं तत्पदार्थोऽप्युद्दिश्यमानः पारोक्ष्यादिविरुद्धगुणान्वितो नित्यापरोक्षप्रत्यगात्मना त्वंपदार्थेनान्वयं न प्रतिपद्यते तेनोभयत्रापि विरुद्धधर्मयोरविवक्षितत्वमिति श्लोकार्थः॥२५

यत एतदेवमतोऽनुपादित्सितयोरपि तत्त्वमर्थयोर्विशेषणविशेष्यभावो भेदसंसर्गरहिततावाक्यार्थलक्षणयैवेत्युपसंहारः ।

तदो विशेषणार्थत्वं विशेष्यत्वं त्वमस्तथा ।
लक्ष्यलक्षणसम्बन्धस्तयोः स्यात्प्रत्यगात्मना ॥ २६ ॥

कथं पुनरविवक्षितविरुद्धनिरस्यमानस्य लक्षणार्थत्वम् ।

लक्षणं सर्पवद्रज्ज्वाः प्रतीचः स्यादहं तथा ।
तद्बाधेनैव वाक्यार्थं वेत्ति सोऽपि तदाश्रयात् ॥२७॥

---

ननु नीलमुत्पलमित्यादौ विशेषणविशेष्यभावस्य विशिष्टपरता दृष्टा। इहापि तथैवाभ्युपगन्तव्यमित्याशङ्क्य प्रतिपिपादयिषितार्थविरोधान्मञ्चाः क्रोशन्तीत्यादौ लक्षणपरत्वस्यापि दर्शनादिहापि तथाभ्युपेयमित्याह यत एतदेवमिति । भवतु तथापि किं विशेषणं किंवा विशेष्यमित्यत आह तदो विशेषणार्थत्वमिति । तदस्तत्पदार्थस्य विशेषणत्वं तथा त्वमस्त्वंपदार्थस्य विशेष्यत्वम् । त्वंपदार्थस्याहमिति सामान्यतः प्रसिद्धत्वाद्देहेन्द्रियादिविशेषेषु च विप्रतिपत्तेरद्वितीयब्रह्मात्मावगतित एव पुरुषार्थपर्यवसानाज्जिज्ञासानिवृत्तेस्त्वंपदार्थस्तत्पदार्थेन विशिष्यते । तत्र च विरोधस्फूर्तौ पदार्थाभ्यामखण्डैकरसः प्रत्यगात्मा लक्ष्यत इत्यर्थः । यद्वा । तत्त्वमर्थयोरुभयोरप्यन्योन्यापेक्षया विशेषणत्वं विशेष्यत्वं च भवति त्वमो विशेषणार्थत्वं विशेष्यत्वं तदस्तथेत्यस्याप्युपलक्षणार्थत्वादस्य श्लोकस्येत्यर्थः ॥ २६ ॥

ननु गङ्गायां घोषः प्रतिवसतीत्यादौ गङ्गाशब्दस्य तीरलक्षकत्वेन तद्वाच्यस्य जलप्रवाहस्य नाविवक्षितत्वं विशिष्टतीरावगतिप्रयोजकत्वान्नापि विरुद्धताविनाभावसम्बन्धात् । अत एव न लक्ष्यबुद्ध्या निरस्यमानत्वमिह पुनरहङ्कारस्य लक्षकत्वे त्रितयमपि नास्त्यपुमर्थत्वेनाविवक्षितत्वात् । अनृतादिस्वभावेन विरुद्धत्वाल्लक्ष्यज्ञानाद्बाध्यत्वाच्च तत्कथमस्य लक्षकत्वमित्याक्षिपति कथं पुनरिति । अत्रोत्तरमाह लक्षणमिति ।

इयं चावाक्यार्थप्रतिपत्तिरन्वयव्यतिरेकाभिज्ञस्यैव । यस्मात् ।

यावद्यावन्निरस्यायं देहादीन्प्रत्यगञ्चति ।
तावत्तावत्तदर्थोऽपि त्वमर्थं प्रविविक्षति ॥ २८ ॥

कस्मात्पुनः कारणाद्देहाद्यनात्मत्वप्रतिपत्तावेवात्मा तद-

---

योऽयं सर्पः सा रज्जुरिति प्रयोगे सर्पः स्वरूपेण विवक्षारहितोऽध्यस्तत्वादेव परमार्थसम्बन्धशून्यो रज्जुबुद्ध्या निरस्यमानोऽपि स्वाधिष्ठानभूताया रज्ज्वाः यद्वदुपलक्षणं भवति प्रतिभासमानसर्पाकारानुवादमन्तरेणानवभासमानरज्ज्वाकारस्याप्तवाक्यादवगमानुपपत्तेस्तद्वदहङ्कारो विवक्षारहितः सम्बन्धशून्यो बाध्यमानोऽप्यनवभासमानाद्वितीयप्रत्यगात्मनस्तस्मिन्नध्यस्तो लक्षणं भवति । अहमिति विपर्यासगृहीतस्य प्रत्यगात्मनस्तदनुवादव्यतिरेकेण वाक्यात्तत्त्वतः प्रतिपादनायोगादित्यर्थः । फलितमाह तथा तद्बाधेनेति । यथा रज्जुप्रतिपत्त्या सर्पो रज्जुरिति वाक्यार्थं सर्पाश्रयात्सर्पबाधयैव प्रतिपद्यत एवं सोऽपि प्रत्यगात्माहं ब्रह्मेति वाक्यार्थमहङ्काराश्रयादहङ्कारबाधयैव प्रतिपद्यते । तस्माद्ब्रह्माहंपदयोर्वैयधिकरण्यं नाशङ्कितव्यमितिभावः ॥ २७ ॥

एवं वाक्यादवाक्यार्थप्रतिपत्तिर्भवतीत्युक्तम् । कथं तर्हि श्रुतवाक्यादपि केचित्तथा न प्रतिपद्यन्त इत्यत आह इयं चेति । आत्मैव सर्वावस्थास्वन्वयी व्यभिचारिणश्च देहेन्द्रियादय इत्यन्वयव्यतिरेकानुसंधानेन निवृत्तप्रतिबन्धानामेवावाक्यार्थपतिपत्तिरितरेषां तदभावान्नोपपद्यते न तु वाक्यस्यासामर्थ्यादित्यर्थः । देहेन्द्रियप्राणमनोबुद्ध्यव्याकृतान्ताननात्मन आत्मत्वेन गृहीतानन्वयव्यतिरेकाभ्यामुपायाभ्यां मुमुक्षुः स्थूलदेहादारभ्य यथा यथा निरस्यति तथा तथा तत्पदार्थोऽपि त्वंपदार्थाभेदावगत्यनुसारितया प्रवेष्टुमिच्छति विरोधिनः परिच्छेदाभिमानस्य निरस्तत्वादिति श्लोकमवतारयति यस्मादिति ॥ २८ ॥

नन्वारोपितसर्पादिनिवृत्तौ तदधिष्ठानस्य रज्ज्वादेः प्रतिपत्तिरेव लोके

र्थमात्मत्वेनाभिलिङ्गते न विपर्यय इति। उच्यते।
प्रत्यगात्मानवबोधस्यानात्मस्वाभाव्यात्तदभिनिर्वृत्तश्चायं
बुद्ध्यादिदेहान्तस्तस्मिन्नात्मत्वमविद्याकृतमेवात्मत्वमिवा-
नात्मत्वमपि साविद्यस्यैव। यतो निरविद्यो विद्वानवा-
क्यार्थरूप एव केवलोऽवशिष्यते तस्मादुच्यते।

देहादिव्यवधानत्वात्तदर्थं स्वयमप्यतः।
पारोक्ष्येणैव जानाति साक्षात्त्वं तदनात्मनः॥ २९॥

---

दृश्यते न तु रज्ज्वादेरर्थान्तरात्मना प्रतिपत्तिस्तत्कथमिह देहादेरात्म-
भावनिवृत्तौ तदधिष्ठानस्य त्वमर्थस्य तदर्थताप्रतिपत्तिः। प्रतिपत्तौ वा
ब्रह्मकार्यतया देहादेर्ब्रह्मात्मत्वाद्देहाद्यात्मत्वप्रतिपत्तावेव ब्रह्मत्वप्रति-
पत्तिः किं न स्यादित्याक्षिपति कस्मादिति। समाधत्त उच्यत इत्या-
दिना। आत्माविद्यायास्तावज्जडस्वभावत्वाद्दृश्यत्वाज्ज्ञाननिवर्त्त्यत्वाच्चा-
नात्मत्वं स्वाभाविकं। तत्कार्यत्वाच्च देहादेरप्यनात्मत्वं केवलकूटस्थब्रह्म-
कार्यत्वानुपपत्तेस्तथात्मनश्चिद्रूपत्वात्कूटस्थत्वात्स्वयंप्रकाशत्वाच्च ब्रह्मत्वं
स्वाभाविकं। तेन तस्य देहादावात्मत्वप्रतीतेरेव ब्रह्मभावप्रच्युतिस्तन्नि-
वृत्तौ तु स्वाभाविकब्रह्मरूपतामेवासौ प्रतिपद्यत इत्यर्थः। तथाप्यना-
त्मनां स्वरूपेणावस्थितत्वान्नात्यन्तिकानर्थनिवृत्तिः स्यात् "द्वितीयाद्वै
भयं भवती"ति श्रुतेरित्याशङ्क्याह आत्मत्वमिवेति। देहादीनामात्मभाव-
वदनात्मस्वरूपमप्यविद्यावत एव भवति रजतादिवत्तेषां स्वरूपेण सं-
सृष्टरूपेण चात्मन्यध्यस्तत्वात्। तस्माद्वाक्यार्थप्रतिपत्तेरविद्यानिवृत्तौ
सर्वानर्थनिवृत्तिरित्यर्थः। उभयमप्यविद्याकृतमिति कथमवगम्यत इत्या-
शङ्क्य विद्योदये पूर्णमेवावशिष्यत इत्युक्तत्वादित्याह यतो निरविद्य
इति। उक्तेऽर्थे श्लोकमवतारयति तस्मादिति। यस्माद्देहादिलक्षणव्यव-
धानात्स्वयं स्वात्मभूतमपि तत्पदार्थं ब्रह्मपारोक्ष्येणैव जानाति व्यवहि-
तमनात्मभूतमिव प्रतिपद्यतेऽतस्तेषामन्वयव्यतिरेकाभ्यामनात्मत्वावग-
मात्साक्षात्त्वमपरोक्षात्मरूपत्वं तत्पदार्थस्य भवतीत्यर्थः। अथवा यत

यथोक्तार्थप्रतिपत्तिसौकर्याय दृष्टान्तोपादानम् ।

प्रत्यगुद्भूतपित्तस्य यथा बाह्यार्थपीतता ।
चैतन्यं प्रत्यगात्मीयं बहिर्वद्दृश्यते तथा ॥ ३० ॥

यस्मादेवमतो विशुद्धमवसीयताम् ।

पदान्युद्धृत्य वाक्येभ्यो ह्यन्वयव्यतिरेकतः ।
पदार्थाँल्लोकतो बुद्ध्वा वेत्ति वाक्यार्थमञ्जसा ॥ ३१ ॥

कुतः पुनः सामान्यमात्रवृत्तेः पदस्य वाक्यार्थप्रतिपत्ति-हेतुत्वमिति । बाढम् ।

---

एवमतः स्वात्मभूतमपि तदर्थमशोधितत्वम्पदार्थौ देहादिव्यवधानात्पारोक्ष्येणैव जानाति देहाद्यनात्मप्रतिपत्तेः साक्षात्त्वमपरोक्षत्वं जानातीत्यर्थः ॥ २९ ॥

ननु कथं स्वात्मभूतस्य स्वात्मनि प्रकाशमाने पारोक्ष्यतया प्रतिभास इति तत्राह यथोक्तेति । अहमित्यभिमन्यमानशरीरैकदेशे समुद्भूतपित्तस्य पुंसस्तद्गतपीतता यथा पीतः शङ्ख इति बाह्यार्थोपरक्ततया बहिरिव भासत एवं प्रत्यगात्मनोऽपि तदर्थस्य बाह्याव्याकृताद्युपरागाद्बहिष्ठवदवभासत इत्यर्थः ॥ ३० ॥

यत उक्तन्यायेन तत्त्वमस्यादिवाक्यस्याखण्डार्थपर्यवसानमविरुद्धं तस्माद्वाक्यान्निःशङ्कं यथोक्तार्थो निश्चीयतामित्युपसंहरति यस्मादिति । पदानां वाक्येभ्यः समुद्धारो नाम प्रयोगभेदेषु पदानामावापोद्वापाभ्यां तत्तत्पदार्थेषु शक्त्यवधारणं तत्कृत्वा पदार्थांश्चान्वयव्यतिरेकाभ्यां लोकतो वृद्धव्यवहारतश्च पदशक्तिप्रतियोगिनो बुध्वा वाक्यतात्पर्यानुसारेण वाक्यार्थं प्रतिपद्यत इत्यर्थः ॥ ३१ ॥

ननु सामान्यमात्रे गृहीतसम्बन्धस्य पदस्य वाक्यार्थबोधकत्वं नोपपद्यते वाक्यार्थविशेषत्वात् । न ह्यन्यत्रगृहीतसम्बन्धस्य पदस्यान्यत्रबुद्धिजनकत्वं सम्भवतीत्याक्षिपति कुतः पुनरिति । पदस्य सामान्यवाचकत्वेऽपि विशेषस्य वाक्यतात्पर्यविषयत्वं न विरुध्यत इति समाधत्ते बाढ-

सामान्यं हि पदं ब्रूते विशेषो वाक्यकर्तृकः ।
श्रुत्यादि प्रतिबद्धं सद्विशेषार्थं भवेत्पदम् ॥ ३२ ॥

अन्वयव्यतिरेकपुरःसरं वाक्यमेव सामानाधिकरण्यादिनाऽविद्यापटलप्रध्वंसद्वारेण मुमुक्षुं स्वाराज्येऽभिषेचयति न त्वन्वयव्यतिरेकमात्रसाध्योऽयमर्थ इत्याह ।

बुद्ध्यादीनामनात्मत्वं लिङ्गादपि च सिध्यति ।
निवृत्तिस्तावता नेतीत्यतो वाक्यं समाश्रयेत् ॥ ३३ ॥

न केवलमनुमानमात्रशरणोऽभिलषितमर्थं न प्राप्नोतीत्यनर्थं चाप्नोतीत्याह ।

---

मिति । विशेषो वाक्यकर्तृको वाक्यतात्पर्यविषय इत्यर्थः । ननु कथं न विरुध्यते पदसमुदायात्मकं हि वाक्यं पदानि च सामान्यमात्रविषयाणि ततस्तत्समुदायात्मकं वाक्यमपि सामान्यमात्रविषयं स्यान्न विशेषार्थविषयमित्यत आह श्रुत्यादीति । यद्यपि स्वतः सामान्यमात्रविषयं पदं तथापि श्रुतिलिङ्गवाक्यादिभिर्नियन्त्रितं सदन्विताभिधानसमयेऽन्वये विशिष्टार्थे तात्पर्यतो वर्त्तते यथा सर्वान्ब्राह्मणान्भोजयेदित्युक्ते सर्वशब्दो निमन्त्रितब्राह्मणविषयो भवति । अन्यथा विशिष्टव्यवहारासिद्धेरित्यर्थः ॥ ३२ ॥

चतुर्विधान्वयव्यतिरेकाभ्यां शोधितपदार्थस्याखण्डार्थप्रतीतिसिद्धेर्वाक्यमनर्थकमित्याशङ्क्य प्रमाणमन्तरेण युक्तिमात्रादज्ञानस्यानिवृत्तेस्तन्निवृत्तये वाक्यमेव समाश्रयणीयमित्युक्तमर्थं निगमयति अन्वयव्यतिरेकेति । बुद्ध्यादीनामिति । बुद्ध्यादीनामनात्मत्वं युक्तितः सिध्यति न तु तेषां कारणाज्ञाननिवृत्तिद्वारेण निवृत्तिस्तावता सिध्यति तस्या अप्रमाणत्वेनाज्ञाननिवर्त्तकत्वायोगात् । तस्मात्तन्निवृत्तये प्रमाणभूतं वाक्यमेव समाश्रयणीयमित्यर्थः ॥ ३३ ॥

इतश्च वाक्यमेव समाश्रयणीयमज्ञाननिवृत्तय इत्याह न केवल-

अनादृत्य श्रुतिं मोहादतो बौद्धास्तमस्विनः ।
आपेदिरे निरात्मत्वमनुमानैकचक्षुषः ॥ ३४ ॥

न चानादरे कारणमस्ति यस्मात्सर्वत्रैवानादरनिमित्तं प्रमाणस्य प्रमाणान्तरप्रतिपन्नप्रतिपादनं वा विपरीतप्रतिपादनं वा संशयितप्रतिपादनं वा न वा प्रतिपादनमिति । न चैतेषामन्यतमदपि कारणमस्ति । यत आह ।

मानान्तरानवष्टब्धं निर्दुःख्यात्मानमञ्जसा ।
बोधयन्ती श्रुतिः केन न प्रमाणमितीर्यते ॥ ३५ ॥

न च संशयितव्यमवगमयति । यतः ।

---

मिति ॥ ३४ ॥

प्रमाणभूतस्य वाक्यस्य लोके मूलप्रमाणापेक्षादर्शनाद्वेदस्यापौरुषेयतया च तदसम्भवात्तत्प्रतिपादितेऽर्थेऽस्माकमनादर इति सुगतमतमाशङ्क्यानादरे कारणाभावान्नैवमित्याह न चेति । कुतोऽनादरे कारणं नास्तीत्याशङ्क्य "नद्यास्तीरे फलानि सन्ति" "वायुर्वै क्षेपिष्ठा देवते"त्यादिवत्प्रमाणान्तरसिद्धार्थप्रतिपादनस्य वा "अम्बुनि मज्जन्त्यलाबूनि ग्रावाणः प्लवन्ते" "आदित्यो यूप" इत्यादिवत्प्रमाणान्तरविरुद्धार्थप्रतिपादनस्य वा "स्थाणुर्वा पुरुषो वा को हि तद्वेद यद्यमुष्मिँल्लोकेऽस्ति वा न वे"त्यादिवदनवधारितवस्तुप्रतिपादनस्य वा समुद्रघोषभेरीशब्दहुंफड्वौषडित्यादिवदप्रतिपादनस्य वात्राभावादित्याह यस्मात्सर्वत्रैवेति । कुतस्तेषामन्यतमन्नास्तीत्यवगम्यत इत्यत आह यत आहेति । "वायुर्वै क्षेपिष्ठा देवता" "अग्निर्हिमस्य भेषजमि"त्यादिवन्मानान्तराधिगतस्याप्रतिपादनान्नानुवादलक्षणमप्रामाण्यमित्यर्थः । मानान्तरानधिगतत्वे हेतुः निर्दुःखीति । अहं दुःखीत्यादिवत्संसारातीतत्वस्य मानान्तरानधिगतत्वादेवादित्यो यूप इत्यादिवद्विपरीतप्रतिपादनलक्षणमप्यप्रामाण्यं नाशङ्कनीयमित्याह आत्मानमञ्जसेति । आत्मनः स्वरूपेणाबाध्यत्वादिति भावः ॥३५॥

तर्हि संशयितावगमकत्वादप्रामाण्यमित्यत आह न च संशयितव्य-

सर्वसंशयहेतौ हि निरस्ते कथमात्मनि ।
जायेत संशयो वाक्यादनुमानेन युष्मदि ॥ ३६ ॥

अपिच ।

यत्र स्यात्संशयो नासौ ज्ञेय आत्मेति पण्डितैः ।
न यतः संशयप्राप्तिरात्मनोऽवगतित्वतः ॥ ३७ ॥

अनवबोधकत्वं तु दूरोत्सारितमेव । यत आह ।

बोध्येऽप्यनुभवो यस्य न कथञ्चन जायते ।
तं कथं बोधयेच्छास्त्रं लोष्टं नरसमाकृतिम् ॥ ३८ ॥

---

मिति । कुत इत्यत आह यत इति । सर्वसंशयानां हेतौ युष्मद्यहङ्कारप्रमुखेऽनात्मनि चतुर्विधान्वयव्यतिरेकलक्षणानुमानेन निरस्ते सति वाक्यादात्मनि कथं संशयो जायेतेत्यर्थः ॥ ३६ ॥

पूर्वं प्रमाणस्वभावपर्यालोचनया संशयो न भवतीत्युक्तमिदानीं प्रमेयभूतात्मस्वभावपर्यालोचनयापि न संशयसम्भव इत्याह अपि चेति । यत्रेति । यत्र संशयः स्यादसावात्मेति न ज्ञेय इत्युक्तं तत्र हेतुमाह न यत इति । आत्मनो निःसामान्यविशेषस्य स्वयंप्रकाशत्वेन नित्यापरोक्षतया संशयायोग्यत्वादध्यारोपितदृश्यप्रपञ्चस्य तस्मिन्संशयालम्बनत्वसम्भवेऽपि विशिष्टरूपत्वेनानात्मत्वात्स्वरूपतावन्मात्रे संशयो न भवतीत्यर्थः ॥ ३७ ॥

तर्हि तस्याप्रतिपादकत्वादप्रामाण्यमस्त्वित्यत आह अनवबोधकत्वमिति । ननु श्रुतवाक्यस्यापि बोधोत्पत्त्यदर्शनादनवबोधकत्वं दूरोत्सारितमिति न शक्यते वक्तुमित्याशङ्क्य गाढमूढचेतस्त्वेन प्रतिपत्तियोग्यमपि विषयमप्रतिपद्यमानस्यानधिकारित्वादधिकारिणः प्रमितिजनको वेद इति न्यायाच्च श्रुतवाक्यस्यापि बोधो न जायते न तु वाक्यस्यानवबोधकत्वादतो नानवबोधकत्वलक्षणमप्रामाण्यमित्याह बोध्येऽपीति । सुखेन बोद्धुं योग्येऽपि यस्य बोधो न जायते तं कथं शास्त्रं बोधयेदि-

अन्वयव्यतिरेकपुरःसरं वाक्यमेवावाक्यार्थरूपमात्मानं प्रतिपादयतीत्यस्य पक्षस्य द्रढिम्ने श्रुत्युदाहरणमुपन्यस्यति ।

**जिघ्राणीममहं गन्धमिति यो वेत्त्यविक्रियः ।**
**स आत्मा तत्परं ज्योतिः शिरसीदं वचः श्रुतेः॥३९॥**

यथा "तत्सत्यं स आत्मा तत्त्वमसी"त्यस्य शेषत्वेनान्वयव्यतिरेकश्रुतिर्यथा "य एषोऽक्षिणि पुरुषो दृश्यत"

---

त्यर्थः । बोधेऽपीति पाठे स्वप्रकाशबोधस्वरूपात्मन्यपि यस्यानुभव आपरोक्ष्यं न जायत इत्यर्थः ॥ ३८ ॥

अन्वयव्यतिरेकलक्षणस्य तर्कस्य पदार्थशोधनद्वारेण वाक्यार्थप्रतिपत्तिहेतुत्वमुक्तं तत्राविशेषेण पुरुषोत्प्रेक्षारूपाणां तर्काणां तद्धेतुत्वप्रसक्तौ वाक्यार्थप्रतिपत्तिनियमो न स्यात् पुरुषोत्प्रेक्षारूपाणां निरङ्कुशत्वादित्याशङ्क्य प्रतिवेदान्तं सृष्टिस्थितिप्रलयनियमनप्रवेशार्थवादसूचितानामेव तर्काणां तद्धेतुत्वं न तु पुरुषोत्प्रेक्षारूपाणामिति दर्शयति अन्वयव्यतिरेकेति । छन्दोगानां महावाक्यं तच्छेषभूतन्यायप्रदर्शकावान्तरवाक्यं च श्लोकेन दर्शयति जिघ्राणीममिति । अहमिमं गन्धं जिघ्राणीति व्यवस्थितं प्रमातारं यो वेत्तीति व्यभिचारिणीनां गन्धादिवृत्तीनां तदाश्रयस्य च प्रमातुर्यः साक्षी तमव्यभिचारिणं त्वंपदार्थमन्वयव्यतिरेकाभ्यां विविच्य परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुष इति तत्पदार्थरूपतामस्याचष्ट इत्यर्थः ॥ ३९ ॥

यथा छन्दोगानां तत्त्वमसीतिमहावाक्यशेषत्वेनावस्थात्रयसाक्षिणोऽन्वयव्यतिरेकश्रुतिरुदाहृता तथा वाजसनेयिनामप्यहं ब्रह्मास्मीति महावाक्यशेषत्वेन "योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुष" इत्यादिवाक्यं श्रूयते तथा प्रतिवेदान्तमित्थमन्वयव्यतिरेकश्रुतयो द्रष्टव्यास्तेन न शुष्कतर्काणामिहानुप्रवेश इत्यभिप्रेत्याह यथेति । पूर्वश्लोकेनाथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणमित्यन्तस्य तत्त्वमसीति-

इत्याद्या "अथ यो वेदेदं जिघ्राणी"त्यन्ता । तथा"हं ब्रह्मास्मी"त्यस्य शेषः ।

अहमः प्रत्यगात्मार्थो निरस्ताशेषयुष्मदः ।
बम्भणीति श्रुतिर्न्याय्या योऽयमित्यादिनाऽसकृत् ४०

कथं पुनरयमर्थोऽवसीयते । अहंव्याजेनात्रात्मार्थो बुबोधयिषित इति । यतः ।

एष आत्मा स्वयंज्योती रविसोमाग्निवाक्षु सः ।
इतेष्वस्तं हगेवास्ते भासयंश्चित्तचेष्टितम् ॥ ४१ ॥

---

महावाक्यशेषभूतस्यार्थमभिधायाधुनानेन श्लोकेनाहं ब्रह्मास्मीति महावाक्यशेषभूतस्य योऽयं विज्ञानमय इत्यादिवाक्यस्यार्थमाह अहम इति । "अहं ब्रह्मास्मी"ति महावाक्यगताहम्पदस्य लिलक्षयिषितवाक्यार्थानुरोधेन निरस्ताशेषयुष्मदो व्यावर्त्तिताशेषानात्मजातस्य प्रत्यगात्मा लक्ष्योऽर्थ इति "योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुष" इति श्रुतिश्चतुर्विधान्वयव्यतिरेकलक्षणन्यायोपेता तात्पर्येणाचष्ट इत्यर्थः । यद्वा । निरस्ताशेषयुष्मदः शोधिततत्त्वंपदार्थस्य मुमुक्षोरित्यर्थः । अथवा । निरस्ताशेषयुष्मद इति हेतौ पञ्चमी । निरस्ताशेषयुष्मत्त्वादित्यर्थः ॥ ४० ॥

कया पुनरुपपत्त्याहंशब्दो वाच्यार्थं परित्यज्य लक्षणया कूटस्थात्मनि प्रवर्त्तेत इत्युत्तरश्लोकापेक्षामाह कथमिति । वाक्यशेषान्यथानुपपत्त्येत्युत्तरश्लोकमवतारयति यत इति । एष इति । "अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तेऽग्नौ शान्तायां वाचि किंज्योतिरेवायं पुरुष इती"त्युपक्रम्यादित्यादिबाह्याभ्यन्तरज्योतिषामुपरम"आत्मैवाऽस्य ज्योतिर्भवतीत्यात्मनैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते विपल्येतीति" इति च बुद्ध्यादिसाक्षिणं कूटस्थत्वेन प्रतिपादितत्वादित्यर्थः ॥ ४१ ॥

निर्णेनेक्ति च पृष्टो मुनिः ।

आत्मनैवेत्युपश्रुत्य कोऽयमात्मेत्युदीरिते ।
बुद्धेः परं स्वतोमुक्तमात्मानं मुनिरभ्यधात् ॥ ४२ ॥

यस्माच्चात्मात्राहंव्याजेन प्रत्यङ्मात्रो जिग्राहयिषितस्तस्मादहंवृत्तिः स्वरूपस्य विलयेनैव वाक्यार्थावगमाय कारणत्वं प्रतिपद्यत इतीममर्थमाह ।

अहंवृत्त्यैव तद्ब्रह्म यस्मादेषोऽवगच्छति ।
मत्स्वरूपलयेनातः कारणं स्यादहंकृतिः ॥ ४३ ॥

अत एव च यः प्रतिज्ञातोऽर्थो नाहंग्राह्ये न तद्धीन इ-

---

आत्मनैवायं ज्योतिषास्त इत्युक्त आत्मशब्दस्य च कोशपञ्चके साधारणत्वा"त्कतम आत्मे"ति जनकेन पृष्टो याज्ञवल्क्यो मुनि"र्योऽयं विज्ञानमयः प्राणेष्वि"ति देहेन्द्रियाणि व्युदस्य हृदीत्यधिदैवं रूपं व्युदस्य विज्ञानमयशब्देनोपात्तां बुद्धिमन्तरिति व्युदस्य जडविशेषोपादानतया प्राप्तमव्याकृतं ज्योतिरिति व्युदस्य जडविशेषेषु प्रतिबिम्बितं चैतन्यं पूर्णत्वात्पुरुष इति व्युदस्य तेभ्यः परं प्रत्यगात्मानमहंशब्दार्थं यतोऽतिशयेन निश्चित्य दर्शयति ततोऽप्युक्तार्थोऽवसीयतामिति श्लोकमवतारयति निर्णेनेक्ति चेत्यादिना । निर्णेनेक्ति अतिशयेन निर्णयतीत्यर्थः ॥४२॥

नन्वहङ्कारस्य लक्षणतया स्वरूपेणावस्थितत्वाल्लक्ष्यस्याद्वितीयत्वासिद्धिरवस्थित्यभावे च लक्षणाभावादेव तदसिद्धिरित्याशङ्क्य लक्ष्यस्वरूपावरोधेन लक्ष्यबुद्ध्युत्पादनसमय एवाहङ्कारस्य तत्रारोपितस्य विलयान्नोक्तदोष इत्युत्तरश्लोकतात्पर्यमाह यस्माच्चेति । यस्मादेष मुमुक्षुरहं ब्रह्मासीत्यहङ्कारेणैव ब्रह्म प्रतिपद्यते ततोऽहङ्कारस्वरूपबाधयैवाहङ्कारो वाक्यार्थप्रतिपत्तिकारणं भवति सर्पो रज्जुरितिवदिति श्लोकयोजना ॥ ४३ ॥

तत्त्वमस्यादिवाक्यार्थे प्रत्यक्षादिविरोधो नास्तीति द्वितीयाध्याये यत्प्रतिज्ञातं तदित्थमुपपादितमिदानीमुपसंह्रियत इत्याह अत एवेति ।

त्यादिः स युक्तिभिरुपपादित इति कृत्वोपसंह्रियते ।

गृहीताहम्पदार्थश्चेत्कस्माज्ज्ञो न प्रपद्यते ।
प्रत्यक्षादिविरोधाच्चेत्प्रतीच्युक्तिर्न युष्मदि ॥ ४४ ॥

पूर्वस्यैव पदार्थस्य विस्पष्टार्थमाह ।

पराञ्च्येव तु सर्वाणि प्रत्यक्षादीनि नात्मनि ।
प्रतीच्येव प्रवृत्तं तत्त्वमसीति वचोऽञ्जसा ॥ ४५ ॥

तस्मात्प्रमातृप्रमाणप्रमेयेभ्यो हीयमानोपादीयमानेभ्यो ऽन्वयव्यतिरेकाभ्यां मुञ्जेषीकावदशेषबुद्धिविक्रियासाक्षितयात्मानं निष्कृष्य तत्त्वमस्यादिवाक्येभ्योऽपूर्वादिलक्षणमात्मानं विजानीयात् । तदेतदाह ।

अहं दुःखी सुखी चेति येनायं प्रत्ययोऽध्रुवः ।
अवगत्यन्त आभाति सम आत्मेति वाक्यधीः ॥४६॥

---

प्रतिपन्नाहम्पदार्थप्रतिपत्तौ किमित्यहं ब्रह्मास्मीति वाक्यार्थं न प्रतिपद्यत इत्युक्ते पूर्ववाद्याह प्रत्यक्षादीति । उत्तरमाह प्रतीचीति । तत्त्वमस्याद्युक्तिः प्रतीचि प्रत्यगात्मनि न युष्मदि । प्रत्यक्षादि तु सुखदुःखादिविशिष्टबुद्ध्युपाधिके वर्त्तते न प्रतीचि । ततो भिन्नविषयत्वेन प्रत्यक्षाद्यागमयोर्विरोधाभावाच्छोधिताहम्पदार्थोऽहं ब्रह्मास्मीत्यवाक्यार्थं प्रतिपद्यत एवेत्यर्थः ॥ ४४ ॥

प्रतीच्युक्तिर्न युष्मदीति श्लोकभागः प्रपञ्च्यत इत्याह पूर्वस्यैवेति । पराञ्चि पराग्विषयाणीत्यर्थः ॥ ४५ ॥

यस्माच्छोधितपदार्थस्यावाक्यार्थप्रतिपत्तौ न मानान्तरविरोधस्तस्मात्तदर्थं ततः प्रतिपत्तिर्घटत एवेत्युपसंहरति तस्मादिति । अवस्थात्रयसंसृष्टस्वभावेभ्यः प्रत्यगात्मानं निष्कृष्य महावाक्यादपूर्वमनपरमनन्तरमित्याद्यतदारोपनिवर्त्तकवाक्यैः "सत्यं ज्ञानमनन्तमि"त्यादिस्वरूपविशेषप्रतिपादकवाक्यैश्च प्रमितं ब्रह्म प्रत्यक्त्वेन जानीयादित्यर्थः । अहं दुः-

प्रमाणान्तरानवष्टब्धं निरस्ताशेषकार्यकारणात्मकद्वैतप्रपञ्चं सत्यज्ञानानन्दलक्षणमात्मानं तत्त्वमस्यहंब्रह्मास्मीत्यादिवाक्यं संशयितमिथ्याज्ञानाज्ञानप्रध्वंसमुखेन साक्षादपरोक्षात्करतलन्यस्तामलकवत्प्रतिपादयत्येवेत्यसकृदभिहितम् । तत्र केचिदाहुः । तत्त्वमस्यादिवाक्यैर्यथावस्थितवस्तुयाथात्म्यान्वाख्याननिष्ठैर्न यथोक्तोऽर्थः प्रतिपत्तुं शक्यतेऽभिधाश्रुतित्वात्तेषाम् । न हि लोकेऽभिधाश्रुतेः प्रमाणान्तरनिरपेक्षाया नद्यास्तीरे फलानि सन्तीत्यादिकायाः प्रामाण्यमभ्युपगतम् । अतो नियोगमुखेनैवाभिधाश्रुतेः प्रामाण्यं युक्तं प्रमाणान्तरनिरपेक्षत्वान्नियोगस्य । अस्य परिहारार्थमशेषप्रत्यक्षादिप्रमेयत्वनिराकरणद्वारेणातीन्द्रियार्थविषयत्वादभिधाश्रुतेः

---

स्मीति । दुःखित्वादिप्रत्यय आगमापायित्वादध्रुवोऽवगत्यन्तः प्रमित्यन्तो येन साक्षिणाभाति स एव सर्वज्ञः परमेश्वरो ममात्मेति वाक्यार्थधीर्भवतीत्यर्थः ॥ ४६ ॥

एतदेवमनुवदति प्रमाणान्तरेति । उत्तरश्लोकद्वयव्यावर्त्यामाशङ्कामाह तत्र केचिदिति । ननु किमिति सिद्धवस्त्वनुवादनिष्ठैः प्रतिपत्तुं न शक्यत इत्यत आह अभिधाश्रुतित्वादिति । विधिपदरहितवाक्यत्वादित्यर्थः । अस्याप्यनधिगतार्थगन्तृत्वात्प्रामाण्यमस्त्वित्याशङ्क्याह न हि लोक इति । सिद्धार्थविषयवाक्यस्य नद्यास्तीरे फलानि सन्तीत्यादिवत्सापेक्षत्वेनाप्रामाण्यं भवतीति यतस्ततः कार्यपरत्वं वाक्यस्याभ्युपेयं कार्यार्थस्य प्रमाणान्तरायोग्यत्वात्प्रमाणान्तरायोग्यविषयस्य च वेदस्य निरपेक्षप्रामाण्यसम्भवादित्युपसंहरति अत इति । उत्तरश्लोकयोस्तात्पर्यमाह अस्य परिहारार्थमिति । नहि सिद्धार्थविषयत्वं प्रमाणान्तरसापेक्षत्वे प्रयोजकं लोके गामानयेत्यादिप्रवर्त्तकवाक्येष्वपि तद्दर्शनात् ।

प्रामाण्यं सुप्तपुरुषप्रबोधकवाक्यस्येव वक्तव्यमित्ययमारम्भः ।

नित्यावगतिरूपत्वादन्यमानानपेक्षणात् ।
शब्दादिगुणहीनत्वात्संशयानवतारतः ॥ ४७ ॥
तृष्णानिष्ठीवनैर्नात्मा प्रत्यक्षाद्यैः प्रमीयते ।
प्रत्यगात्मत्वहेतोश्च स्वार्थत्वादप्रमेयतः ॥ ४८ ॥

श्रुतिरपीममर्थं निर्वदति ।

दिदृक्षितपरिच्छिन्नपराग्रूपादिसंश्रयात् ।
विपरीतमतो दृष्ट्या स्वतोबुद्धं न पश्यति ॥ ४९ ॥

ततश्च सिद्धवस्तुनिष्ठं कार्यनिष्ठं वा यद्वाक्यं पौरुषेयं तन्मानान्तरसापेक्षं दृष्टमिति पौरुषेयत्वमेव सापेक्षत्वे प्रयोजकम् । इह पुनर्वेदान्तेषु तदभावान्मानान्तरायोग्यविषयत्वाच्च सुतरां मानान्तरानपेक्षत्वम् । सुप्तपुरुषप्रबोधकवाक्यस्येव बोध्यपुरुषमात्रविषयतया तदनवबोधनिवर्त्तनेन प्रामाण्यं चोपपन्नमिति भावः । उक्तेऽर्थे श्लोकमवतारयति अयमारम्भ इति । स्वभावतोऽवगतिरहितस्य मानान्तरापेक्षा दृष्टा । आत्मनः कूटस्थस्यावगतिरूपत्वेन मानान्तरानपेक्षत्वात्प्रत्यगात्मत्वादेव व्यवधानाभावात्स्वार्थत्वादेवान्योपभोग्यताभावादविषयत्वेन च प्रमेयतायोग्यत्वाच्छ्रोत्रादिप्रवृत्तिविषयशब्दादिगुणरहितत्वादहमस्मि न वेति संदेहरहितात्मस्वभावत्वेनानुमानादिप्रवृत्त्ययोग्यत्वाद्ग्राहकप्रवृत्त्युत्तरकालीनदिदृक्षाप्रयुक्तकरणव्यापारजन्यतया तृष्णाकार्यभूतैः प्रत्यक्षादिकैरात्मा न विषयीक्रियत इत्यर्थः ॥ ४७ ॥ ४८ ॥

प्रत्यक्षाद्यविषयत्वप्रतिपादकश्रुतितात्पर्याभिधायक उत्तरश्लोक इत्याह श्रुतिरपीति । दृश्यदेशादिपरिच्छिन्नपराग्भूतरूपादिविषयत्वात्प्रत्यक्षदृष्टेस्तथा तद्विपरीतमदृश्यमपरिच्छिन्नं प्रत्यग्भूतं रूपादिरहितं स्वप्रकाशमात्मानं न पश्यतीत्यर्थः । यद्वा । दिदृक्षिताद्दृश्यात्परिच्छि-

न्यायसिद्धमतो वक्ति दृष्टेर्द्रष्टारमात्मनः ।
न पश्येत्प्रत्यगात्मानं प्रमाणं श्रुतिरादरात् ॥ ५० ॥

अनुमानाविषयत्वेऽन्यदपि कारणमुच्यते ।

प्रत्यक्षस्य पराक्त्वान्न सम्बन्धग्रहणं यतः ।
आत्मनोऽतोऽनुमित्यास्यानुभवो न कथञ्चन ॥५१॥

एवमयं प्रमातृप्रमाणप्रमेयव्यवहारः सर्व एव पराचीनविषय एव न प्रतीचीनमात्मानमवगाहयितुमलम् । एवं च सत्यनेनैव यथोक्तोऽर्थोऽवसातुं शक्यत इत्याह ।

प्रमाणव्यवहारोऽयं सर्व एव पराग्यतः ।
सुविचार्याप्यतोऽनेन युष्मद्येवं दिदृक्षते ॥ ५२ ॥

---

ज्ञातपराग्भूताद्रूपाद्याश्रयाज्ज्ञातो घटादेर्विपरीतमात्मानं प्रत्यक्षरूपतया दृष्ट्या कोऽपि न पश्यतीत्यर्थः ॥ ४९ ॥

इत्थमर्थमुपवर्ण्य तत्र श्रुतिमवतारयति न्यायसिद्धमिति । यतो रूपादिहीनत्वमतो "न दृष्टेर्द्रष्टारं पश्येरि"त्यादिका प्रमाणभूता श्रुतिर्दृष्टेर्द्रष्टारमात्मनः स्वस्य च तं प्रत्यग्भूतमात्मानं न पश्येरित्युक्तयुक्तिसिद्धं तात्पर्यतो वक्तीत्यर्थः । यद्वा । दृष्टेरात्मनः स्वरूपद्रष्टारं न पश्येदित्यर्थः ॥ ५० ॥

अनुमानविषयत्वे निराकृते सत्यर्थापत्त्यादिविषयत्वमपि निराकृतमेव भवतीति मन्यमान आह अनुमानेति । प्रत्यक्षस्येति । प्रत्यक्षस्याविनाभावलक्षणसम्बन्धग्राहकस्य पराक्त्वात्सामान्यविशेषवदनात्मवस्तुगोचरतया तद्रहितात्माविषयत्वादनुमानादप्यात्मा नानुभूयते नाप्यर्थापत्त्यादिभिरित्यर्थः ॥ ५१ ॥

एवमुक्तयुक्तिभिरात्मनः प्रमाणान्तरागोचरत्वं निश्चेतव्यमित्युपसंहरति एवमिति । यथोक्तोऽर्थ आत्मनः प्रमाणान्तराविषयत्वमित्यर्थः । अनेन युष्मद्येवेति । प्रत्यक्षादिना युष्मद्यनात्मन्येव दिदृक्षां करोतीत्यर्थः ॥ ५२ ॥

यस्माल्लौकिकप्रत्यक्षादिप्रमाणानधिगम्योऽहंब्रह्मास्मीति वाक्यार्थस्तस्मात् ।

अन्वयव्यतिरेकाभ्यां निरस्याप्राणतो यतः ।
वीक्षापन्नस्य कोऽस्मीति तदसीति श्रुतिर्जगौ ॥ ५३ ॥

सोऽयमन्वयव्यतिरेकन्याय एतावानेव । यदवसानो वाक्यार्थस्तदभिज्ञस्याहंब्रह्मास्मीत्याविर्भवति । द्रष्टृदृश्यविभागेनागमापायिसाक्षिविभागेन च श्रुत्यभ्युपगमतः संक्षिप्योच्यते ।

दृश्यत्वाद्घटवद्देहो देहवच्चेन्द्रियाण्यपि ।
मनश्चेन्द्रियवज्ज्ञेयं मनोवन्निश्चयादिमत् ॥ ५४ ॥

---

अतो वेदान्तानामात्मनि प्रामाण्यमित्येतदपि सिद्धमित्युपसंहरति यस्मादिति । देहादिप्राणपर्यन्तमनात्मजातमन्वयव्यतिरेकाभ्यामनात्मतया निरस्य कोऽस्म्यहमित्यात्मस्वरूपजिज्ञासोस्तत्स्वरूपप्रतिपादनाय तत्त्वमसिवाक्यं प्रवृत्तमित्यर्थः ॥ ५३ ॥

अवाक्यार्थज्ञानसाधनपदार्थविवेकहेतुभूतयोरन्वयव्यतिरेकयोः पूर्वाध्यायोदितयोः पुनः संक्षेपतः प्रदर्शनायोत्तरो ग्रन्थ इति तात्पर्यं वक्ष्यन्प्रथमं तयोरव्यवहितं विषयं निर्दिशति सोऽयमिति । एतावानेव तावत्पर्यन्त इत्यर्थः । कियत्पर्यन्त इत्यत आह यदवसान इति । अवसीयते निश्चीयतेऽनेनेत्यवसानो योऽयमन्वयव्यतिरेकन्यायोऽवसानो निश्चायकोऽस्य वाक्यार्थस्येति यदवसानः । असम्भावनाविपरीतभावनानिरासेन वाक्यार्थनिश्चयस्यान्वयव्यतिरेकन्यायाधीनत्वाद्यदवसानो वाक्यार्थोऽन्वयव्यतिरेकाभिज्ञस्याहंब्रह्मास्मीत्याविर्भवति सोऽवाक्यार्थनिर्णयोऽन्वयव्यतिरेकानुसन्धानपर्यन्त इत्यर्थः । यद्वा । यस्य पदार्थस्यावसानो निर्णयः पुष्कलकारणं वाक्यार्थस्येति यदवसानो वाक्यार्थस्तदभिज्ञस्य न्यायतः पदार्थाभिज्ञस्याहंब्रह्मासीत्याविर्भवति स पदार्थनि-

**तथा सकलकार्यकारणागमापायिविभागसाक्षित्वेनापि ।**

**प्रागसद्याति पश्चात्सत्सच्च यायादसत्तथा ।**
**अनात्माभिजनं तत्स्याद्विपरीतः स्वयं दृशिः ॥ ५५ ॥**

**तत्र घटादीनां दृश्यानामनात्मत्वं द्रष्ट्रात्मपूर्वकं प्रत्यक्षेणैव प्रमाणेनोपलभ्यानात्मनश्चासाधारणान्धर्मानवधार्य तैर्दृश्यत्वागमापायादिभिर्धर्मैः शरीरेन्द्रियमनोनिश्चयादिवृत्तीरनात्मतया व्युदस्याहंवृत्तिमतोऽपि दृश्यत्वाविशेषाद्द्रष्टृपूर्वकत्वमवसीयते । तदेतदाह ।**

**घटादयो यथा लिङ्गं स्युः परम्परयाहमः ।**
**दृश्यत्वादहमप्येवं लिङ्गं स्याद्द्रष्टुरात्मनः ॥ ५६ ॥**

---

र्णयो न्यायानुसन्धानपर्यन्त इत्यर्थः । इदानीमुत्तरग्रन्थसन्दर्भस्य तात्पर्यमाह द्रष्टृदृश्येति । दृश्यत्वाद्धटवद्देह इति । घटवदनात्मेत्यर्थः । निश्चयादिमदन्तःकरणम् ॥ ५४ ॥

इदानीं द्वितीयमन्वयव्यतिरेकं दर्शयति तथेति । प्रागिति । जनेः प्रागसद्भूत्वा पश्चात्सद्याति सत्त्वं प्राप्नोति सच्च भूत्वा प्रध्वस्तमसत्त्वं प्राप्नुयादित्येतदनात्माभिजनमनात्मस्वाभाव्यं । तत्साक्षी पुनस्तद्विपरीत आगमापायशून्यः कूटस्थ इत्यर्थः । यद्वा । जाग्रदाद्यवस्थात्रये यदभूत्वा भवति भूत्वा च न भवति तदनात्माभिजनमनात्मस्थानं । तस्माद्विपरीतोऽवस्थात्रयसाक्षी सदैव भूत्वागमापायशून्यः कूटस्थ इत्यर्थः ॥ ५५ ॥

इदानीं द्रष्टृकोटिनिविष्टतया परैरात्मत्वेनाभिमन्यमानस्याहङ्कारस्यानात्मत्वं साधयति तत्रेति । असाधारणधर्मा दृश्यत्वागमापायरूपादिमत्त्वादयः । घटादय इति । देहाद्बाह्या घटादयो विषया देहादिविशिष्टस्य द्रष्टुर्लिङ्गं भवन्ति । एवं देहोऽपीन्द्रियविशिष्टस्य सोऽपि मनसस्तदपि बुद्धेः साप्यहङ्कारस्य यथालिङ्गं भवति । एवमहङ्कारोऽपि दृश्यत्वात्स्वव्यतिरिक्तद्रष्टुर्लिङ्गमित्यर्थः ॥ ५६ ॥

ननु द्रष्टृदर्शनदृश्यानां जाग्रत्स्वप्नसुषुप्तेष्वागमापायदर्शनाद्यत्साक्षिकौ तेषामागमापायौ स आगमापायविभागरहित आत्मा यथा यन्निबन्धनौ जगतः प्रकाशाप्रकाशौ सप्रकाशाप्रकाशविभागरहितः सूर्य इति । यदा चैवं तदा वाक्यावगमस्यार्थस्यानुदितानस्तमितविज्ञानमात्रस्वभावस्यानुमानेनैव प्रतिपन्नत्वात्पुनरपि वाक्यस्य निर्विषयत्वप्रसङ्गः । नैष दोषो लिङ्गव्यवधानेन तत्प्रतिपत्तेः । ननु साक्षादपरोक्षादात्मस्वभावेनानात्मनो हानोपादानयोः सम्बन्धग्रहणात्कमतिशयं वाक्यं कुर्यात् । मैवं वोचो लिङ्गाधीनत्वात्तत्प्रतिपत्तेः । न हि लिङ्गव्य-

---

एवमन्वयव्यतिरेकयोरात्मावगतिहेतुत्वे प्रपञ्चिते पुनरपि वाक्यस्य निर्विषयत्वं प्राप्तमिति सांख्यमतमुत्थापयति ननु द्रष्टृदर्शनदृश्यानामिति । सप्रकाशाप्रकाशविभागरहितः सूर्य इति । प्रतिक्षणं जायमानप्रकाशरहितः सूर्य इत्यर्थः । लिङ्गजनितविज्ञानस्य व्यवहिततया परोक्षतया वस्तुग्राहकत्वादपरोक्षतया ग्रहणाय वाक्यमेवापेक्ष्यत इति समाधत्ते नैष दोष इति । यद्वा । सामान्योपाधौ गृहीतव्याप्तिकेन लिङ्गेन व्याप्तिं प्रति सम्बन्धिभूतसामान्यतिरस्कृततयात्मनोऽग्रहणादतिरस्कृतस्वरूपमात्रग्रहणाय वाक्यमेवापेक्ष्यत इति समाधत्ते नैष दोष इति । ननु द्रष्टृदर्शनदृश्यानां सर्वेषामनात्मनामागमापाययोः साक्षादपरोक्षस्वभावेनैव साक्षिणा साक्ष्यसाक्षिभावसम्बन्धस्य गृहीतत्वात्तयोः साक्ष्यत्वेन साक्ष्यनुमानमपि साक्षादपरोक्षस्वभावेनैव भवेत्तस्मादपरोक्षज्ञानार्थमपि न वाक्यापेक्षा स्यादिति पुनश्चोदयति ननु साक्षादिति । दृष्टान्तदार्ष्टान्तिकान्वितसाधारणाकारस्यैवानुमानप्रमेयत्वादन्यथानुमानानुदयात्ततश्च साधारणाकारतिरस्कृतत्वेनानुमानादात्मप्रतिपत्तिर्न तु निर्विशेषासाधारणाकारेण साक्षात्प्रतिपत्तिस्तस्मादपरोक्षज्ञानोत्पत्तये वाक्यापेक्षेति समाधत्ते मैवं वोच इति । नन्वसाधारणाकारेण सा-

वधानेनात्मप्रतिपत्तिः साक्षात्प्रतिपत्तिर्भवति "यमेवैष वृणुते तेन लभ्य" इति श्रुतेः । अत आह ।

लिङ्गमस्तित्वनिष्ठत्वान्न स्याद्वाक्यार्थबोधकम् ।
सदसद्व्युत्थितात्मायमतो वाक्यात्प्रतीयते ॥ ५७ ॥

ननु यदि व्यावृत्तसदसद्विकल्पजालं वस्त्वभीष्टं वाक्याद्भवतस्तथापि तून्सार्यते वाक्यविषया तृष्णा । यस्मादन्तरेणापि वाक्यश्रवणं निरस्ताशेषविकल्पमागोपालाविपालपण्डितं सुषुप्ते वस्तु सिद्धमतो नार्थो वाक्यश्रवणेन । नैतदेवम् । किं कारणम् । सर्वानर्थबीजस्यात्मानवबोधस्य सुषुप्ते सम्भवात् । यदि हि सुषुप्तेऽज्ञानं नाभवि-

---

क्षात्प्रतिपत्तिर्माभूत्किं तयेत्याशङ्क्यासाधारणाकारेण साक्षादधिगतिर्मोक्षसाधनमिति श्रूयत इत्याह यमेवैष इति । यमेव केवलं निर्विशेषणमेवात्मानमेष साधको वृणुते निरन्तरं तन्निष्ठतया भजते तेन परमात्मनायमात्मानेन साधकेन लभ्यः कथं तस्यैष आत्मा स्वां तनुं तस्य साधकस्य प्रकृतः प्रत्यगात्मा स्वामसाधारणां समस्तविशेषणनिर्मुक्ततया निर्विकल्पां तनुं विवृणुते विवृतां करोति स्पष्टमभिव्यञ्जयतीत्यर्थः । यद्वा । यमेव साधकमेवैष परमेश्वरो मामयं जानात्वित्यनुगृह्णाति तेन साधकेनायं लभ्यः । शेषं पूर्ववत् । उक्तेऽर्थे श्लोकमवतारयति अत आहेति । लिङ्गस्यास्तित्वनिष्ठत्वादस्ति कश्चिदात्मेति धर्मिसद्भावमात्रनिष्ठत्वात्सदसदादिविकल्पशून्यासाधारणस्वभावबोधकं न भवति ततस्तत्प्रतिपत्तिर्वाक्यादेवेत्यर्थः ॥ ५७ ॥

ननु गोपालाविपालपण्डितपर्यन्तानां प्राणिनामशेषविकल्पहीनवस्तुनः सुषुप्ते वाक्यमन्तरेण सिद्धत्वात्पुनर्वाक्यवैय्यर्थ्यमापतितमिति शङ्कते नन्वित्यादिना । कार्योपाधिभेदस्य विलीनत्वेऽपि सर्वानर्थहेत्वज्ञानस्य सुषुप्तेऽपि विद्यमानत्वान्न वाक्याधिगम्यं निर्विकल्पकं वस्तु तत्र सिद्धमिति परिहरति नैतदिति । अज्ञानसद्भावमेव विपक्षे बाधक-

ष्यदन्तरेणापि वेदान्तवाक्यश्रवणमनननिदिध्यासना-न्यहं ब्रह्मास्मीत्यध्यवसायात्सर्वप्राणभृतामपि स्वरसत एव सुषुप्तप्रतिपत्तेः सकलसंसारोच्छित्तिप्रसङ्गः । न च कैवल्यात्पुनरुत्थानं न्याय्यमनिर्मोक्षप्रसङ्गान्न चान्य एव सुषुप्तोऽन्य एवोत्थित इति शक्यं वक्तुं नाद्राक्षमहं सुषुप्तेऽन्यत्किञ्चिदपीत्युत्थितस्य प्रत्यभिज्ञादर्शनात् । तस्मादवश्यं सुषुप्तेऽज्ञानमभ्युपगन्तव्यम् । ननु यदि तत्राज्ञानमभविष्यद्रागद्वेषघटाज्ञानादिवत्प्रत्यक्षमभविष्यद्यथेह लोके घटं न जानामीत्यज्ञानमव्यवहितं प्रत्यक्षम् । अत्रोच्यते । न । अभिव्यञ्जकाभावात् । कथमभिव्यञ्जकाभाव इति चेच्छृणु ।

> बाह्यां वृत्तिमनुत्पाद्य व्यक्तिः स्यान्नाहमो यथा ।
> नर्तेऽन्तःकरणं तद्वद्ध्वान्तस्य व्यक्तिराञ्जसी ॥ ५८ ॥

---

कथनेन साधयति यदि हीति । नन्वस्तु सुषुप्तौ समूलसंसारोच्छेद इत्याशङ्क्य मैवं पुनरुत्थानदर्शनादित्याह न च कैवल्यादिति । ननु सुषुप्तौ मुक्त एव पुनरुत्थानं चान्यस्यैवेत्याशङ्क्य सुषुप्तोत्थितयोः प्रत्यभिज्ञयैकत्वाभिगमान्मैवमित्याह न चान्य इति । ननु सुषुप्त्यवस्थायां साक्षिवेद्यं चेदज्ञानमभ्युपगम्यते तर्हि तत्कालेऽपि ब्रह्माज्ञानमिति विशेषाकारेण व्यवहार्यं स्याद्रागद्वेषघटाज्ञानानां साक्षिवेद्यानां जाग्रत्यपरोक्षत्वेन व्यवहारयोग्यत्वदर्शनादित्याशङ्कते ननु यदीति । निर्विकल्पकानुभवसिद्धस्याप्यस्य स्फुटाभिव्यञ्जकोपाधेरन्तःकरणस्याभावान्न स्फुटप्रतिपत्तिर्यथाहङ्कारस्य निर्विकल्पकानुभवसिद्धस्य बाह्यघटादिविषयबुद्धिवृत्त्यनुदये स्फुटप्रतिपत्तिर्न सम्भवति तद्वदिति श्लोकमवतारयन्परिहरति अत्रोच्यत इत्यादिना ॥ ५८ ॥

कश्चिदतिक्रान्तं प्रतिस्मृत्य दृश्यत्वादहमप्येवंलिङ्गं स्याद्द्रष्टुरात्मन इति निर्युक्तिकमभिहितमित्याह । किंकारणम् । अहंतज्ज्ञात्रोर्विवेकाप्रसिद्धेर्यथेह घटदेवदत्तयोर्ग्राह्यग्राहकत्वेन स्फुटतरो विभागः प्रसिद्धो लोके न तथेहाहङ्कारतज्ज्ञात्रोर्विभागोऽस्तीति तस्मादसाध्वेतदभिहितमिति । अत्रोच्यते ।

दाह्यदाहकतैकत्र यथा स्याद्वह्निदारुणोः ।
ज्ञेयज्ञातृकतैवं स्यादहंज्ञात्रोः परस्परम् ॥ ५९ ॥

एवं तावदविद्योत्थस्यान्तःकरणस्य बाह्यविषयनिमित्त-

---

उत्तरश्लोकस्य नातीतानन्तरश्लोकेन सम्बन्धः किन्तु दृश्यत्वादहमप्येवमित्यनेनैव सम्बन्धं कथयंस्तद्व्यावर्त्यामाशङ्कामाह कश्चिदतिक्रान्तमिति । अहं पश्यामीत्यहम एव दृश्यस्य द्रष्टृत्वानुभवादहंद्रष्ट्रोर्विभागो नास्ति तस्मादहमो घटवद्दृश्यत्वेनैव स्वव्यतिरिक्तद्रष्ट्रनुमापकत्वमनुपपन्नमित्यर्थः । यद्यप्यहं पश्यामीत्यत्र ग्राह्यत्वं ग्राहकत्वं चैकाश्रयं प्रतीयते तथाप्यन्यत्रानयोर्विभिन्नाधिकरणत्वदर्शनाच्चिद्धातोरहङ्कारव्यतिरेकेण सुषुप्त्यादौ द्रष्टृत्वदर्शनादहङ्कारस्य च सुखदुःखादिवेद्यधर्मविशिष्टस्य घटादिवद्द्रष्टृत्वानुपपत्तेर्ग्राह्यत्वमेव न ग्राहकत्वम् । ग्राहकत्वं ह्यहङ्कारात्मनोरैक्याध्यासादात्मगतमेव विशिष्टगतत्वेन प्रतीयते । यथा केवलं वह्निगतमेव दग्धृत्वं वह्निविशिष्टदाह्यकाष्ठगतत्वेन प्रतीयते तस्माद्ग्राहकानुमापकत्वमुपपद्यत इति परिहरति अत्रोच्यत इति । दाह्येति ॥ ५९ ॥

ननु यदि घटादिवदहङ्कारोऽपि साक्षिचैतन्यविषयस्तर्हि विषयत्वाविशेषाद्घटादाविवाहङ्कारेऽपीमं पश्यामीतिवन्ममबुद्धिः किं न स्यादहं पश्यामीत्येव कुतः प्रतीतिस्तथा घटादावप्यहमितिबुद्धिः किं न स्यान्ममेतिबुद्धिरेव कुत इत्याशङ्क्य तदुपपादयन्नुत्तरश्लोकमवतारयितुं तदुपयोगिवृत्तमर्थं तावदनुवदति एवमिति । बाह्याः शब्दादयो विषयास्तन्नि-

रूपावच्छेदायाहंवृत्तिर्व्याप्रियते । तयावच्छिन्नं सत्कूटस्थप्रत्यगात्मोपादानावबोधरूपस्याव्यवधानतया विषयभावं प्रतिपद्यत इति । तत्र तयोर्ज्ञात्रहन्तारूपयोरवभासकावभास्यत्वसम्बन्धव्यतिरेकेण नान्यत्सम्बन्धान्तरमुपपद्यते । अहन्तारूपं त्वात्मसात्कृत्वाहङ्कञ्चुकं परिधायोपकार्यत्वोपकारकत्वक्षमः सन् बाह्यविषयेणोपकारिणापकारिणा वात्मात्मीयं सम्बन्धं प्रतिपद्यते । तदभिधीयते ।

इदंज्ञानं भवेज्ज्ञातुर्ममज्ञानं तथाहमः ।
अज्ञानोपाधिनेदं स्याद्विक्रियातोऽहमो मम ॥ ६० ॥

---

मित्त्वं रूपमन्तःकरणस्य तदाकारपरिणामस्तेन तस्यावच्छेदाय जानामीति तद्विशेषितत्वायाहंवृत्तिरहमित्याकारा जायतेऽन्यथा स्वपरवेद्ययोर्विशेषाभावप्रसङ्गादित्यर्थः । तथाप्यन्तःकरणस्य कथं प्रतीतिरित्यत आह तयावच्छिन्नमिति । कूटस्थो यः प्रत्यगात्मा तदुपादानस्तज्जन्यो योऽवबोधरूपोऽहंवृत्त्यवच्छिन्नान्तःकरणप्रतिबिम्बितश्चिदाभासस्तदधीनत्वात्तस्य जन्यत्वं तस्येन्द्रियव्यवधानमन्तरेणाहंवृत्त्यवच्छिन्नमन्तःकरणं विषयत्वं प्रतिपद्यत इत्यर्थः । तथापि घटादिवदात्मीयतया किमिति नावभासत इत्याशङ्क्योपकार्योपकारकलक्षणसम्बन्धान्तराभावादित्याह तत्र तयोरिति । घटादीनामात्मीयत्वेनावभासस्तर्हि कथमित्याशङ्क्य सम्बन्धान्तरसम्भवादित्याह अहन्तारूपमिति । अहङ्कारात्मकमन्तःकरणमात्मसात्कृत्वाहंपरिच्छेदं चात्मन्यध्यस्य व्यवस्थितः प्रत्यगात्मा तत एव हेतोर्घटाद्युपकारापकारविषयत्वयोग्यो भवति तत एव घटादिविषयैरात्मीयत्वेन सम्बन्धं प्रतिपद्यते तत एव स्वस्वामिलक्षणसम्बन्धान्तरस्य विद्यमानत्वाद्घटादीनां ममेतिबुद्धिविषयत्वमित्यर्थः । उपपादितेऽर्थे श्लोकमवतारयति तदभिधीयत इति । ज्ञातुः साक्षिण इदमिति ज्ञानं साक्षात्स्वावभास्येऽन्तःकरणेऽहंवृत्त्यवच्छिन्ने स्यात्तस्यैव चाहमोऽहङ्कारतामापन्नस्याहङ्कञ्चुकस्य ममेति ज्ञानं घटादिषूपकार्योपकारकभाव-

एकस्यैव ज्ञातुरन्तर्बाह्यनिमित्तभेदाद्विभिन्नेऽपि विषय इदम्ममेतिज्ञानं द्वैरूप्यं जायत इत्युक्तम्। अत्रोपक्रियमाणापक्रियमाणस्यैव ज्ञातुर्विषये मम प्रत्ययो भवति विपर्यये चेदंप्रत्यय इति कथमवगम्यते। अवगम्यतामन्वयव्यतिरेकाभ्याम्। तत्कथमित्याह।

अनुपक्रियमाणत्वान्न ज्ञातुः स्यादहं मम।
घटादिवदिदं तु स्यान्मोहमात्रव्यपाश्रयात्॥ ६१॥

---

लक्षणसम्बन्धाद्भवतीत्यर्थः। कुतोऽयं विभाग इत्यत आह अज्ञानेति। अज्ञानमुपाधिर्यस्येत्यज्ञानोपाधिश्चैतन्याभासस्तेनेदमिति प्रत्ययः स्यादतःपरं बाह्योपकारादिसम्बन्धवशादहमो ममेति विक्रियाज्ञानपरिणामः स्यादित्यर्थः। यद्वा। अहङ्कारापन्नस्य ज्ञातुर्घटादौ विषय इदमिति ममेति च ज्ञानद्वयमुत्पद्यते। तत्रेदमिति ज्ञानमज्ञानमात्रोपाधिकं ममेति ज्ञानमहमो विक्रियातः स्यादुपकारकमपकारकमित्यहङ्कारविक्रियोपाधिकमित्यर्थः॥ ६०॥

उक्तविभागे प्रमाणदर्शनायोत्तरश्लोक इति वृत्तं कीर्त्तयन्नाह एकस्यैवेति। अन्तर्बाह्यनिमित्तभेदादन्तर्निमित्तं चैतन्याभासो बाह्यनिमित्तमुपकारादिविषयज्ञानपरिणामस्तद्भेदाद्विभिन्नेऽपि विषयेऽन्तःकरणे घटादौ चेदमिति ममेति च ज्ञानद्वयं जायत इत्युक्तमित्यर्थः। यद्वा। एकस्मिन्नेव घटादौ विषये ज्ञातुरेकस्यैवाज्ञानमात्रोपाधिवशाद्धीदमिति ज्ञानमुपकारकमपकारकमित्यहङ्कारविक्रियावशान्ममेदमिति च ज्ञानद्वयं जायत इत्युक्तमित्यर्थः। अत्रेति। अहङ्कारोपाधिकस्य घटादिविषये स्वस्वामित्वलक्षणसम्बन्धान्ममप्रत्ययो भवति। अज्ञानमात्रोपाधिकस्यान्तःकरण इदंप्रत्ययो भवतीति कथमवगम्यत इत्यर्थः। अथवोपकारापकारविषयभावं प्रतिपन्नस्य विशिष्टस्य ज्ञातुरुपकारापकारसाधनत्वविशिष्टे ममप्रत्ययो भवति केवलस्य ज्ञातुः केवले घटादाविदंप्रत्यय इति कुतोऽवगम्यत इत्यर्थः। अनुपक्रियमाणत्वादिति। ज्ञातुः साक्षि-

मोहतत्कार्याश्रयत्वाज्ज्ञातृत्वविक्रिययोः पूर्वत्रेदंममज्ञानान्वयः प्रदर्शितः । अथाधुना तद्व्यतिरेकेण व्यतिरेकप्रदर्शनार्थमाह ।

विक्रियाज्ञानशून्यत्वान्नेदं न च ममात्मनः ।
उत्थितस्य सतोऽज्ञानं नाहमज्ञासिषं यतः ॥ ६२ ॥

आत्मानात्मविवेकस्येयत्ताप्रदर्शनार्थमाह ।

वाक्यप्रत्यक्षमानाभ्यामियानर्थः प्रतीयते ।
अनर्थकृत्तमोहानिर्वाक्यादेव सदात्मनः ॥ ६३ ॥

---

णोऽहङ्कारेणानुपक्रियमाणत्वादनपक्रियमाणत्वाच्चाहमहङ्कारो घटादिवन्मम न भवति ममप्रत्ययविषयो न भवति मोहमात्रमेव व्यपाश्रयो यस्य चिदाभासस्य तद्वत्त्वादिदं तु स्यादिदमित्यवभास्यत्वमात्रमेव स्यादित्यर्थः । उपकारकत्वादिशून्ये ह्यहङ्कारे तत्साक्षिण इदमित्येव प्रत्ययस्य दर्शनात्तादृशे घटादाविदमित्येव प्रत्ययः स्यादुपकारकत्वादिधर्मसहिते ममप्रत्ययः स्यादिति द्रष्टव्यम् ॥ ६१ ॥

अज्ञानतत्कार्यव्यतिरेक इदंममेति च ज्ञानद्वयव्यतिरेकं प्रदर्शयितुमुत्तरश्लोक इति वक्ष्यन्प्रदर्शितमन्वयमनुवदति मोहेति । यस्मादज्ञानोपाधिकमात्मनोऽहङ्कारसाक्षित्वं यस्माच्च तत्कार्यपरिणाम्यन्तःकरणसम्बन्धोपाधिकमात्मनः परिणामाश्रयत्वं तस्मादज्ञानतत्कार्योपाधिद्वारेणात्मनोऽहङ्कारे घटादौ चेदं ममेति च ज्ञानद्वयं भवतीत्यर्थः । विक्रियेति । सुषुप्तौ शब्दाद्याकारपरिणामलक्षणविक्रियाभावादज्ञानाभावाच्चेदंज्ञानं ममज्ञानं च न दृश्यत इत्यर्थः । ननु कथमज्ञानशून्यत्वं सुषुप्तेऽप्यज्ञानस्य साधितत्वादित्याशङ्क्य तत्राज्ञोऽहमिति स्फुटतरव्यवहाराभावात्तथोच्यत इत्याह उत्थितस्येति । उत्थितस्यैव सतो नाहमज्ञासिषमित्यज्ञानं सम्भवतीति । यत इत्याकाङ्क्षितपदपूरणेन योजना ॥ ६२ ॥

आत्मानात्मविवेकस्येयत्ता नाम सर्वानात्मविविक्तसाक्षिस्वरूपावगतिपर्यन्तता तत्प्रदर्शनायोत्तरश्लोक इति सम्बन्धमाह आत्मानात्मेति ।

द्वितीयाध्यायादौ श्रोतृचतुष्टयमुपन्यस्तम् । तत्र कृत्स्नानात्मनिवृत्तौ सत्यां यः प्रत्यगात्मन्यवाक्यार्थतां प्रतिपद्यते स क्षपिताशेषान्तरायहेतुरिति न तं प्रति वक्तव्यं किञ्चिदप्यवशिष्यते । योऽपि वाक्यश्रवणमात्रादेव प्रतिपद्यते तस्याप्यतीन्द्रियशक्तिमत्त्वान्न किञ्चिदप्यपेक्षितव्यमस्ति । यश्च श्रावितत्त्वमस्यादिवाक्यः स्वयमेवान्वयव्यतिरेकौ कृत्वा तदवसान एव वाक्यार्थं प्रतिपद्यतेऽसावपि यथार्थं प्रतिपन्न इति पूर्ववदेवोपेक्षितव्यः । यः पुनरन्वयव्यतिरेकौ कारयित्वापि पुनःपुनर्वाक्यं श्राव्यते यथाभूतार्थप्रतिपत्तये तस्य कृतान्वयव्यतिरेकस्य सतः कथं वाक्यं श्राव्यत इति । उच्यते ।

नवसंख्याहृतज्ञानो दशमो विभ्रमाद्यथा ।
न वेत्ति दशमोऽस्मीति वीक्षमाणोऽपि तान्नव ॥६४॥

---

वाक्येति । वाक्यं त्वम्पदार्थशोधकं "कतम आत्मा" "कोऽयमात्मे"त्यादिकम् । प्रत्यक्षमन्वयव्यतिरेकजन्यमात्मानात्मविवेकानुभवनम् । ताभ्यां प्रमाणाभ्यामियानर्थः सकलानात्मविविक्तः कूटस्थः प्रत्यगात्मा प्रतीयतेऽनुभूयत इत्यर्थः । तर्हि तत्त्वमस्यादिवाक्यमनर्थकं प्राप्तमित्याशङ्क्य मैवं तस्यैव मूलाज्ञाननिवर्त्तकत्वादित्याह अनर्थकृदिति ॥ ६३ ॥

ननु यदि तत्त्वमस्यादिवाक्यं तमोनिवर्त्तकं तर्हि सकृत्प्रवृत्तमेव प्रत्यक्षवत्स्वकार्यं कुर्यादित्याशङ्क्य क्षपिताशेषप्रतिबन्धेऽधिकारिविशेषे तथैवास्त्वित्यभ्यनुज्ञायाक्षपितप्रतिबन्धेऽधिकारिविशेषे प्रतिबन्धक्षयमपेक्ष्यान्वयव्यतिरेकसहकृतं पुनःपुनराश्राव्यमाणं स्वकार्यं कुर्यादिति दृष्टान्तेन प्रतिपादयन्नुत्तरश्लोकसंदर्भस्य तात्पर्यमाह द्वितीयाध्यायेति । तत्र दृष्टान्तं तावद्दर्शयति नवसंख्येति । यथा दशसंख्याकाः पुरुषाः समुद्दिष्टसमिदाहरणादिप्रयोजनाः संभूय ग्रामादरण्यं गतास्ततस्ततः परि-

अथ दृष्टान्तगतमर्थं दार्ष्टान्तिकार्थे समर्पयिष्यन्नाह ।

अपविद्धद्वयोऽप्येवं तत्त्वमस्यादिना विना ।
वेत्ति नैकलमात्मानं नान्वेष्यं चात्र कारणम् ॥६५॥

नान्वेष्यं चात्र कारणमित्युक्तं तत्कस्मादिति चोदिते प्रत्याहान्वेषणासहिष्णुत्वात् । तत्कथमित्याह ।

सेयं भ्रान्तिर्निरालम्बा सर्वन्यायविरोधिनी ।
सहते न विचारं सा तमो यद्वद्दिवाकरम् ॥ ६६ ॥

तस्याः खल्वस्या अविद्याया भ्रान्तेः सम्यग्ज्ञानोत्पत्ति-

---

क्रम्य निवर्त्तितसमिदाहरणादिप्रयोजनाः प्रत्याहृत्यैकत्र मिलिताः सन्तः सर्वे वयं समागता न वेति विमृश्य परिगणनाय प्रवृत्तः कश्चित्स्वातिरिक्तान्नव पुरुषान्वीक्षमाणोऽपि तद्गतनवसंख्ययैवापहृतज्ञानो दशमोऽसीत्याप्तवाक्यश्रवणं विना स्वात्मानं दशमोऽस्मीति विभ्रमाद्यथा न वेत्तीत्यर्थः ॥ ६४ ॥

अपविद्धेति । एवमपि संसारित्वेनाभिमतः प्रत्यगात्मा साक्षात्परमात्मस्वभावोऽपि सन्नज्ञानापहृतस्वभावत्वात्तत्त्वमस्यादिवाक्यमन्तरेणाहमस्मि परं ब्रह्मेति न प्रतिपद्यत इत्यर्थः । ननु स्वयंप्रकाशाद्वयात्मनि कथमज्ञानमुपपद्यत इत्याशङ्क्य दुर्निरूपत्वेन प्रतिभासमात्रशरीरत्वाद्धेतुर्नान्वेषणीय इत्याह नान्वेष्यं चात्र कारणमिति ॥ ६५ ॥

सेयमिति । येयमात्मनः स्वरूपाप्रतिपत्तिर्विपरीतकर्त्तृत्वादिप्रतिपत्तिश्च सेयं भ्रान्तिर्लोकसिद्धपदार्थवत्क्लृप्तकारणशून्यात एव निरालम्बोचितालम्बनशून्या सर्वन्यायविरोधिनी च लोकप्रसिद्धपदार्थान्तरवत्सत्तायां स्थितौ प्रतीतौ च ये न्यायास्तेषां विरोधिन्यत एव विचारन्यायाघातं न सहते यथा तमः स्वनिवर्त्तकप्रकाशं न सहते तद्वदित्यर्थः ॥ ६६ ॥

तर्हि सकार्याज्ञानस्य प्रमाणज्ञाननिवर्त्यत्वात्प्रत्यक्षादिमानान्तरादपि निवृत्तिसम्भवात्पुनरपि वाक्यानुपयोग इत्यत आह तस्याः खल्वित्या-

द्वारेण निवृत्तिः ।

बुभुत्सोच्छेदिनी चास्य सदसीत्यादिना दृढम् ।
प्रतीचि प्रतिपत्तिः स्यान्नासौ मानान्तराद्भवेत् ॥६७॥

कथं पुनर्वाक्यं प्रतिपादयत्येवेति चेद्दृष्टान्तोक्तिः ।

जिज्ञासोर्दशमं यद्वन्नवातिक्रम्य ताम्यतः ।
त्वमेव दशमोऽसीति कुर्यादेवं प्रमां वचः ॥ ६८ ॥

सा च तत्त्वमस्यादिवाक्यश्रवणजा प्रमोत्पन्नत्वादेव न च नैवमिति प्रत्ययान्तरं जायते। तदेतद्दृष्टान्तेन प्रतिपादयति।

दशमोऽसीति वाक्योत्था न धीरस्य विहन्यते ।
आदिमध्यावसानेषु न नवत्वस्य संशयः ॥ ६९ ॥

---

दिना। सर्वसंसारविभ्रमाधिष्ठानस्य प्रत्यगात्मनो मानान्तरायोग्यत्वात्तत्प्रतिपादकवाक्यजन्यमेव ज्ञानं तन्निवर्त्तकमित्यर्थः ॥ ६७ ॥

ननु प्रमाणान्तरादशक्यामधिगतिं वाक्यं कथं कर्त्तुं शक्नुयादित्याक्षिप्य दृष्टान्तप्रदर्शनेन समाधत्ते कथमित्यादिना। नवातिरेकेण दशमं जिज्ञासोस्ताम्यतः क्लिश्यतस्त्वमेव दशमोऽसीति वचो यथा प्रमां कुर्यादेवं तत्त्वमस्यादिमहावाक्यमपि ब्रह्मजिज्ञासोः प्रमां कुर्यादित्यर्थः ॥ ६८ ॥

ननु दशमस्त्वमसीति वाक्यादुत्पन्ना धीः प्रमाणान्तरबाधाभावात्प्रमाणं भवतु तत्त्वमस्यादिवाक्यजन्या तु द्वैतप्रत्ययैः पूर्वोत्पन्नैरुत्तरकालीनैर्वा बाधात्प्रमा न भविष्यतीत्याशङ्क्य समस्तद्वैतप्रत्ययबाधेनैवोत्पन्नत्वान्न पूर्वकालीनैर्बाध्यते। उत्तरकाले तु तद्विरुद्धप्रत्ययान्तरमेव नोत्पद्यत इत्येतद्दृष्टान्तेन प्रतिपादयति सा चेति। दशमोऽसीति। दशमज्ञानोत्पत्तेः पूर्वं तत्समकालमुत्तरकालं वा नवसु बालेषु परिगणयतः संशयाभावाद्दशमोऽसीति वाक्याद्दृढप्रतीतिरुपजायत इत्यर्थः ॥ ६९ ॥

एवं तत्त्वमसीत्यस्माद्वैतनुत्प्रत्यगात्मनि ।
सम्यग्ज्ञातत्वमर्थस्य जायेतैव प्रमा दृढा ॥ ७० ॥

प्रत्यगात्मनि प्रमोपजायत इत्युक्तं तत्र चोद्यते । किं यथा घटादिप्रमेयविषया प्रमा कर्त्रादिकारकभेदानपह्नवेन जायते तथैवोताशेषकारकग्रामोपमर्देन कर्तुः प्रत्यगात्मनीति । उच्यते ।

प्रत्यक्तास्य स्वतोरूपं निष्क्रियाकारकाफलम् ।
अद्वितीयं तदिद्धा धीः प्रत्यगात्मेव लक्ष्यते ॥ ७१ ॥

---

दार्ष्टान्तिकमाह एवमिति । सर्वस्य कस्मान्न जायत इत्याशङ्क्य पदार्थपरिशोधनाभावादित्याह सम्यग्ज्ञातत्वमर्थस्येति । सम्यग्ज्ञातत्वमर्थस्य शोधितत्वम्पदार्थस्येति यावत् ॥ ७० ॥

ननु सा किमद्वैतप्रमा कर्त्रादिकारकानुपमर्देन जायते किं वा तदुपमर्देन । प्रथमे नाद्वैतसिद्धिः कर्त्रादिद्वैतावस्थानात् । द्वितीये त्वद्वितीयत्वप्रमानुदय इति शङ्कते प्रत्यगात्मनि प्रमोपजायत इत्युक्तमिति । अप्रमेयस्य प्रत्यगात्मनः समस्तक्रियाकारकफलशून्याद्वितीयस्वरूपत्वात्तत्प्रमापि तदनुरूपा समस्तप्रमात्रादिप्रपञ्चोपमर्देनोपजायत इति मत्वा सर्वान्तरं निष्क्रियमकारकमफलमद्वयमात्मनः स्वाभाविकं रूपमितरं त्वविद्याध्यारोपितमिति श्लोकेन दर्शयति उच्यत इति । विद्योत्पत्तेः प्राक्प्रमात्रादि सम्भवति । उत्पन्नविद्यस्याविद्यानिवृत्तौ प्रमात्राद्यसम्भवान्नाद्वैतविरोधः । नाप्यद्वैतप्रमानुदयस्तदुत्पत्तेः प्रागारोपितरूपेण प्रमात्रादीनां सम्भवादिति भावः । ननु कथं प्रत्यगात्मनः क्रियाकारकादिशून्यस्वरूपत्वं तस्य कर्तृत्वेन भोक्तृत्वेन च प्रतीयमानत्वादित्याशङ्क्य तत्प्रतीतेरन्तःकरणोपाधिविशिष्टविषयत्वान्न विरोध इत्याह तदिद्धेति । तदिद्धा चैतन्याभासदीप्तेत्यर्थः ॥ ७१ ॥

यस्मादेवम् ।

विपश्चितोऽप्यतस्तस्यामात्मभावं वितन्वते ।
दवीयःस्विन्द्रियार्थेषु क्षीयते ह्युत्तरोत्तरम् ॥ ७२ ॥

आह । यदि वाक्यमेव यथाभूतार्थावबोधकमथ कस्य हेतोरविद्योत्थापितस्य कर्तृत्वादेरुपदेश इत्युक्ते प्रतिविधीयते ।

भ्रान्तिप्रसिद्ध्यानूद्यार्थं तत्त्वम्भ्रान्तिबाधया ।
अयं नेत्युपदिश्येत तथैवं तत्त्वमित्यपि ॥ ७३ ॥

इममर्थं दृष्टान्तेन बुद्धावारोपयति ।

स्थाणुः स्थाणुरितीवोक्तिर्न नृबुद्धिं निरस्यति ।
व्यनुवादात्तथैवोक्तिर्भ्रान्तिं पुंसो न बाधते ॥ ७४ ॥

---

व्यवहारगोचराणां विदुषां तस्यां बुद्धौ त्वात्मविभ्रमोऽपि तस्याः प्रत्यगात्मचैतन्याभासानुविद्धतां गमयतीत्याह यस्मादेवमिति । बुद्धिप्रतिबिम्बितचैतन्याभासव्यवधानादात्मविभ्रमस्य विरलत्वदर्शनादप्येतदवगन्तव्यमित्याह दवीयःस्विति । बुद्धेर्दूरतरेषु शरीरादिबाह्यपदार्थेष्वात्मभावो विवेकिनामपचीयत इत्यर्थः ॥ ७२ ॥

आहेति । येन वा पश्यति येन वा शृणोति द्रष्टा श्रोता मन्ता कर्त्ता बोद्धा विज्ञानात्मा पुरुषः पिप्पलं स्वाद्वत्तीति च त्वम्पदाभिधेये जीवे कर्तृत्वादिसंसारधर्मोपदेशः कस्मादित्यर्थः । एतदुत्तरश्लोकेन समाधीयत इत्याह उक्ते प्रतिविधीयत इति । भ्रान्तीति । स्थाणुर्वा पुरुषो वेति संदिग्धे पुरुष एवेति विपर्यस्ते वा विषये भ्रान्तस्य श्रोतुः प्रसिद्धपुरुषानुवादेन योऽयं पुरुषः सोऽयं स्थाणुर्न पुरुष इति पुरोवर्त्तिनस्तत्त्वमारोपितपुरुषाकारबाधेन यथोपदिश्यते तथाविद्याध्यारोपितकर्तृत्वाद्यनुवादेन जीवस्यापि याथात्म्यं तद्व्युदासेन बोध्यत इत्यर्थः ॥ ७३ ॥

एतदेव व्यतिरेकमुखेन दर्शयति इममिति । व्यनुवादाद्विगतानुवा-

**यस्माच्छ्रोतृप्रसिद्धानुवाद्येव त्वमितिपदं तस्मादुद्दिश्यमानस्यत्वाद्दुःखित्वादेरविवक्षितत्वमेव । विधीयमानत्वे हि सति विरोधप्रसङ्गो न तु विधीयमानानूद्यमानयोरिति । स्वप्रधानयोर्हि पदयोर्विरोधाशङ्का सामान्यालिङ्गितत्वात्तयोर्न विपर्यये ।**

**अनालिङ्गितसामान्यौ न जिहासितवादिनौ ।**
**व्युत्थितौ तत्त्वमौ तस्मादन्योन्याभिसमीक्षणौ ॥७५॥**

---

द्वादारोपितपुरुषाकारानुवादाभावादेकविषयत्वेन विरोधास्फुरणात्केवलमयं स्थाणुरिति बुद्धिः पुरुषबुद्धिं न निवर्त्तयति यथा तथा तद्सीति तावन्मात्रोक्तावपि विरुद्धाकारानुवादाभावे संसारित्वनिराकरणमपि स्फुटं न भवेदित्यर्थः ॥ ७४ ॥

ननु संसारित्वेन प्रत्यक्षमनुभूयमानस्त्वम्पदार्थः कथमसंसारिब्रह्मरूपेण प्रतिपाद्यत इत्याशङ्क्य ब्रह्मस्वरूपविधानाय केवलमनूद्यमानत्वेनाविधेयत्वाद्विधेयरूपेणानूद्यमानस्य दुर्बलत्वाद्बाध्यत्वमेव न तु बाधकत्वशङ्कापीत्युपसंहरन्नाह यस्मादिति । पदार्थस्वभावपर्यालोचनया विरोधाभावमुक्त्वा पदस्वभावालोचनयाप्येवमित्याह स्वप्रधानयोरिति । स्वप्रधानयोः पदयोः किमिति विरोधाशङ्केत्यत आह सामान्यालिङ्गितत्वादिति । गौरश्व इति स्ववाच्यसामान्ययोरपरित्यागात्तथाभूतयोः पदयोः सामानाधिकरण्यं विरुध्यते न विपर्यये । शेषशेषिभावेन वर्त्तमानयोस्तु पदयोर्न विरोध इत्यर्थः । तदेतदाह अनालिङ्गितेति । अनालिङ्गिते परित्यक्तेऽविवक्षिते सामान्ये स्वप्रवृत्तिनिमित्तभूते शवले वाच्ये याभ्यां तत्त्वंशब्दाभ्यां तौ तत्त्वभावनालिङ्गितसामान्यौ तस्मान्न तयोर्विरोध इत्यर्थः । अनालिङ्गितसामान्यत्वं कस्मादित्यत आह न जिहासितवादिनाविति । तौ तत्त्वंशब्दौ प्रतिपिपादयिषिताखण्डाद्वितीयवाक्यार्थविरोधाज्जिहासितं पारोक्ष्यं सद्वितीयत्वं परिच्छिन्नत्वं चास्मिन्प्रयोगे न वदतो न प्रतिपादयतो यस्मादित्यर्थः । तदपि कुत इत्यत आह व्युत्थिता-

अपास्तसामान्यार्थत्वादनुवादस्थत्वाद्विधीयमानेन च सह विरोधाद्दुःखित्वादेरस्तु कामं जिहासितार्थयोरसंसर्गो यथोपन्यस्तदोषविरहात्तत्त्वमर्थयोः संसर्गोऽस्तु नीलोत्पलवदिति चेन्नैवमप्युपपद्यते । तस्मात् ।

तदर्थयोस्तु निष्ठात्मा द्वयपारोक्ष्यवर्जितः ।
नाद्वितीयं विनात्मानं नात्मा नित्यदृशा विना ॥७६॥

अत्राह । किमिह जिहासितं किं वोपादित्सितमिति । उच्यते । प्रत्यगात्मार्थविधायिनस्त्वम्पदादुभयं प्रतीयतेऽहं

---

विति । तौ तत्त्वंशब्दावन्योन्यमभिसमीक्ष्यमाणौ तस्मात्स्ववाच्यार्थसामान्यरूपाद्व्युत्थितौ तात्पर्यविषयैकत्वानुरोधेन परस्परविरुद्धांशं परित्यज्याविरुद्धांशमात्रे व्यवस्थितौ यस्मात्तस्मादित्यर्थः ॥ ७५ ॥

ननु वाच्यार्थयोः परोक्षसद्वितीयत्वयोः सामान्यार्थत्वेनापास्तत्वाद्दुःखितादेरनूद्यमानस्थत्वाद्विधीयमानेन सह विरोधाच्च तयोर्वाच्यार्थयोः संसर्गाभावेऽपि लक्ष्यार्थयोः संसर्ग एवास्त्विति चोदयति अपास्तसामान्यार्थत्वादिति । अपास्तौ च तौ सामान्यार्थौ चेत्यपास्तसामान्यार्थौ । तद्भावोऽपास्तसामान्यार्थत्वं । तथाभूतत्वाज्जिहासितार्थयोरिति सम्बन्धः । श्लोकमवतारयन्परिहरति नैवमपीति । तयोस्तत्त्वम्पदयोर्लक्षणभूतयोर्निष्ठापर्यवसानं लक्ष्यभूत आत्मा द्वित्वपारोक्ष्यवर्जितोऽखण्डैकरसः केवलस्तत्कथं प्रकृत्यर्थयोर्नीलोत्पलवद्विभागेनाप्रतिपत्तौ सत्यां संसर्गः स्यादिति भावः । विभागेनाप्रतिपत्तिरपि कुत इत्यत आह नाद्वितीयमिति । अद्वितीयं तत्पदलक्ष्यं ब्रह्म न प्रत्यगात्मानं विना स्वरूपं लभते तथा सत्यद्वितीयत्वायोगादात्मा च त्वम्पदलक्ष्यो नित्यसिद्धचैतन्यज्योतिषा तत्पदलक्ष्येण विना स्वरूपं न लभते । तथा सति नित्यापरोक्षचिद्रूपत्वायोगात्तदेवंविभागेनाप्रतीतेरखण्डैकरसार्थनिष्ठत्वं तत्त्वम्पदयोरित्यर्थः ॥ ७६ ॥

ननु त्वंशब्दस्य प्रत्यगात्ममात्राभिधायकत्वात्त्वमित्युक्ते तत्र हेयांशो

दुःखी प्रत्यगात्मा च । तत्र च प्रत्यगात्मनोऽहं दुःखीत्य-
नेनाभिसम्बन्ध आत्मयाथात्म्यानवबोधहेतुक एव ।
अतोऽहमर्थोऽनर्थोपसृष्टत्वादज्ञानोत्थत्वाच्च हेय इति प्र-
त्यक्षहेतोरवसीयते । तदर्थे किं हेयं किंवोपादेयमिति ना-
वध्रियते । तत इदमभिधीयते ।

पारोक्ष्यं यत्तदर्थे स्यात्तद्धेयमहमर्थवत् ।
प्रतीचेवाहमोऽभेदः पारोक्ष्येणात्मनोऽपि मे ॥७७॥

कथं पुनस्तदर्थोऽद्वितीयलक्षणः प्रत्यगात्मोपाश्रयं सद्धि-

---

न सम्भवतीति चोदयति अत्राहेति । त्वंशब्दस्य न प्रत्यगात्ममात्राभि-
धायकत्वं किंत्वहङ्कारविशिष्टात्माभिधायकत्वमतस्त्वंशब्दाद्दुःखित्वादि-
धर्मविशिष्टोऽहङ्कारः प्रत्यगात्मा च प्रतीयते ततश्च हेयांशः सम्भवतीति
परिहरति उच्यत इति । ननूभयं प्रतीयते चेदुभयमप्युपादेयमेवास्तु
किमित्येकतरस्यांशस्य हेयत्वं हेयत्वे वा प्रत्यगात्मांश उपादेयो दुः-
ख्यंशो हेय इति विनिगमने किं कारणमित्यत आह तत्र चेति । अनर्थहे-
तुत्वादसत्यत्वादहङ्कारस्य हेयत्वं वाक्यार्थान्वयितया साक्षिभागस्योपा-
देयत्वमित्यर्थः । ननु तदर्थे सर्वज्ञत्वाद्यंशस्य पुरुषार्थत्वाद्धेयत्वं नास्तीति
मत्वा चोदयति तदर्थ इति । श्लोकमवतारयन्परिहरति तत इदमभिधी-
यत इति । अहमर्थवत्पारोक्ष्यस्य हेयत्वं कुत इत्याशङ्क्याज्ञाननिबन्धन-
त्वादित्याह प्रतीचेति । अहमोऽहङ्कारस्य यथा प्रतीचा प्रत्यगात्मना स-
हाज्ञाननिबन्धन एवाभेदस्तथा मे साक्षिस्वभावस्य परमात्मनोऽपि पा-
रोक्ष्येणाभेदस्तन्निबन्धन एव ततो हेयत्वमित्यर्थः । यद्वा । अहङ्कारस्य
प्रत्यगात्मना सह भेदवत्पारोक्ष्येण सह परमात्मनो मम भेदोऽस्ति त-
स्माद्धेयत्वमित्यर्थः ॥ ७७ ॥

ननु तत्पदार्थसामानाधिकरण्यात्त्वम्पदार्थगतदुःखित्वादिकं हेयमि-
त्युक्तं तदयुक्तं तत्पदस्य त्वम्पदार्थानवबोधकत्वेन वैयधिकरण्यात्तस्मि-
न्नारोपितसंसारित्वनिवर्त्तकत्वानुपपत्तेः । न हि शुक्तिविषयज्ञानाद्रज्जु-

तीयत्वं दुःखित्वं निरन्वयमपनुदतीति । उच्यते । न चै-तयोर्निवर्त्तकनिवर्त्यभावं वयं ब्रूमः । कथं तर्हि त्वमर्थे प्रत्यगात्मनि प्रागनवबुद्धाद्वितीयता सानेनावबोध्यते । अतोऽनवबोधनिरासेन तदुत्थस्य सद्वितीयत्वस्य त्वमर्थ-स्थस्य परोक्षत्वस्य च तदर्थस्थस्य निरसनान्न वैयधिकर-ण्यादिचोद्यस्यावसरोऽस्तीति । तदिदमभिधीयते ।

तत्त्वमर्थेन सम्पृक्तो नानात्वं विनिवर्त्तयेत् ।
नापरित्यक्तपारोक्ष्यं त्वंतदर्थं सिसृप्सति ॥ ७८ ॥

कस्मात्पुनः कारणात्तदर्थोऽद्वितीयलक्षणस्त्वमर्थेन प्रत्य-

---

सर्पभ्रमो निवर्त्तते । अथ वैयधिकरण्यपरिहाराय तत्पदमपि त्वम्पदा-र्थमवबोधयतीत्युच्येत तर्हि पौनरुक्त्यबुद्धिसंकरपदान्तरवैयर्थ्यैकप-दवाक्यत्वादिदोषाः प्रादुःस्युरित्याक्षिपति कथं पुनरिति । समाधत्ते उच्यत इति । त्वमर्थोपाधौ तच्छब्देनाद्वितीयब्रह्मरूपत्वविधानात्तदन-वबोधनिवृत्त्या तत्कार्यं संसारित्वमपि निवर्त्तत इत्येतावद्वदामः । न त्वनयोः पदयोस्तदर्थयोर्वा साक्षान्निवर्त्यनिवर्त्तकभावोऽस्तीति तस्मान्न त्वदुक्तवैयधिकरण्यादिदोषाणां प्रसक्तिरित्यर्थः । उक्तेऽर्थे श्लोकमव-तारयति तदिदमभिधीयत इति । तच्छब्दार्थो विधीयमानस्त्वमर्थेनोद्दे-श्येन सम्बद्धस्तदनवबोधनिवृत्त्या तद्गतं नानात्वं निवर्त्तयति । एवं त्व-म्पदार्थोऽप्यपरित्यक्तपारोक्ष्यलक्षणं विरुद्धधर्मं तदर्थं ब्रह्म नैकत्वेन प्र-तिपद्यते तेन तद्गतमपि पारोक्ष्यं नान्तरीयकतया निवर्त्यत इत्यर्थः । संपृक्ताविति पाठे तच्छब्दार्थस्य त्वमर्थेन संपृक्तौ संपर्के सति नानात्वं निवर्त्तत इति योजना ॥ ७८ ॥

ननु वाक्यस्यैक्यतात्पर्यवत्त्वेन दुःखित्वादिनिवृत्तौ तात्पर्याभावादुभ-यत्र तात्पर्ये वाक्यभेदप्रसङ्गान्निवर्त्तकत्वमनुपपन्नमित्यभिप्रेत्य शङ्कते कस्मादिति । वाक्यतात्पर्यविषयैकत्वविरोधान्नान्तरीयकी दुःखित्वादि-

गात्मना पृथगर्थः सन्नविद्योत्थं सद्वितीयत्वं निहन्तीति । उच्यते । विरोधात् । तदुच्यते ।

संसारिताद्वितीयेन पारोक्ष्यं चात्मना सह ।
प्रासङ्गिकं विरुद्धत्वात्त्वम्भ्यां बाधनं तयोः ॥ ७९ ॥

तत्त्वमर्थयोस्तु बाधकत्वेऽन्यदपि कारणमुच्यते ।

अज्ञातपुरुषार्थत्वाच्छ्रौतत्वात्तत्त्वमर्थयोः ।
स्वमर्थमपरित्यज्य बाधकौ स्तां विरुद्धयोः ॥ ८० ॥

एवं तावद्यथोपक्रान्तेन प्रक्रियावर्त्मना न प्रत्यक्षादिप्र-

---

निवृत्तिः स्यादिति समाधत्त उच्यत इति । अर्थमुपपाद्य श्लोकमवतारयति तदुच्यत इति । संसारित्वमद्वितीयेन सह विरुध्यते पारोक्ष्यं चापरोक्षेणात्मना सह विरुध्यते । एवं तयोः प्रतिपाद्यमानेनाद्वितीयेन प्रत्यक्त्वेन च विरोधादेकत्वपराभ्यां तत्त्वम्भ्यां तयोर्बाधनं प्रासङ्गिकं नान्तरीयकं स्यादित्यर्थः । प्रासङ्गिकविरुद्धत्वादिति पाठे प्रासङ्गिके च ते अद्वितीयप्रत्यक्त्वाभ्यां विरुद्धे चेति प्रासङ्गिकविरुद्धे तद्भावस्तत्त्वं । प्रासङ्गिकत्वादारोपितत्वाद्विरुद्धत्वाच्च तयोर्बाधनं क्रियत इत्यर्थः ॥ ७९ ॥

ननु विरुद्धत्वाच्चेत्संसारित्वपारोक्ष्ययोस्तत्त्वमर्थाभ्यां बाधनं तर्हि विरुद्धत्वाविशेषात्तत्त्वमर्थयोरेव बाध्यत्वमितरयोर्बाधकत्वं किं न स्यादित्याशङ्क्य तयोर्बाधकत्वे कारणमुत्तरश्लोकेनोच्यत इत्याह तत्त्वमर्थयोरिति । तत्त्वमर्थयोरन्योन्यविशेषणविशेष्यभावस्याज्ञातत्वे सति पुरुषार्थत्वेन श्रुतितात्पर्यविषयत्वादितरयोस्तु तद्विपरीतार्थत्वात्तत्त्वमर्थावेव स्वमर्थमन्योन्यविशेषणविशेष्यभावलक्षणमपरित्यज्य तद्विरोधिनोः पारोक्ष्यदुःखित्वयोर्बाधकाविति युक्तमित्यर्थः ॥ ८० ॥

एवं तत्त्वम्पदयोर्लक्षणावृत्त्या बोधकत्वे प्रत्यक्षादिविरोधो नास्तीति वृत्तं दर्शयति एवं तावदिति । इदानीं प्रत्यक्षादिविरोधमसन्तमभ्युपगम्य प्रसंख्यानपरतां वाक्यस्य ये मन्यन्ते तन्मतनिराकरणायोपन्य-

माणान्तरैर्विरोधगन्धोऽपि सम्भाव्यते । यदा पुनः सर्वप्रकारेणापि यतमाना नैवेमं वाक्यार्थं सम्भावयामः प्रत्यक्षादिप्रमाणान्तरविरोधत एव तस्मिन्नपि पक्ष उच्यते ।

प्रत्यक्षादिविरुद्धं चेद्वाक्यमर्थं वदेत्क्वचित् ।
स्यात्तु तद्दृष्टिविध्यर्थं योषाग्निवदसंशयम् ॥ ८१ ॥

यदा तु तत्त्वमस्यादिवाक्यं सर्वप्रकारेणापि विचार्यमाणं न क्रियां कटाक्षेणापि वीक्षते तदा प्रसंख्यानादिव्यापारो दुःसम्भाव्य इति । तदुच्यते ।

वस्त्वेकनिष्ठं वाक्यं चेन्न तस्य स्यात्क्रियार्थता ।
वस्तुनो ह्येकरूपत्वाद्विकल्पस्याप्यसम्भवः ॥ ८२ ॥

भिन्नविषयत्वाच्च न प्रमाणान्तरविरोधः । कथम् । उच्यते ।

---

स्यति यदा पुनरिति । तन्निराकरणत्वेन श्लोकमवतारयति तस्मिन्नपि पक्ष इति । एवं सति वाक्यस्य वस्तुनिष्ठत्वमपहाय दृष्टिविध्यर्थमङ्गीकृतं स्यादित्यर्थः ॥ ८१ ॥

अस्तु तर्हि तत्त्वमस्यादिवाक्यस्यापि प्रमाणान्तरविरुद्धत्वात्प्रसंख्यानद्वारेण वस्तुनिष्ठत्वमिति तत्राह यदा त्विति । उपक्रमोपसंहारादिभिर्विचार्यमाणं तत्त्वमस्यादिमहावाक्यं न क्रियापरं दृश्यते तस्मादुपासनाविधिपरत्वं न स्यादित्यर्थः । उक्तेऽर्थे श्लोकमवतारयति तदुच्यत इति । वाक्यस्य केवलवस्तुनिष्ठत्वाद्वस्तुनश्च कूटस्थत्वेन क्रियासाध्यत्वायोगात्कूटस्थत्वादेव नित्यसिद्धं वोपासनादिक्रियासाध्यं वा तदिति विकल्पस्याप्यसम्भवात्तत्त्वमस्यादिवाक्यं न प्रसंख्यानविधिपरमित्यर्थः ॥ ८२ ॥

प्रमाणान्तरविरोधमभ्युपगम्यैतदुक्तं स एव नास्तीत्याह भिन्नविषय-

अपूर्वाधिगमं कुर्वत्प्रमाणं स्यान्न चेन्न तत् ।
न विरोधस्ततो युक्तो विभिन्नार्थावबोधिनोः ॥८३॥

य एवमपि भिन्नविषयाणां विरोधं वक्ति सोऽत्रापि विरोधं ब्रूयात् ।

नायं शब्दः कुतो यस्माद्रूपं पश्यामि चक्षुषा ।
इति यद्वत्तथैवायं विरोधोऽक्षजवाक्ययोः ॥ ८४ ॥

प्रमाणानां सतां न विरोधः श्रोत्रादीनामिव भिन्नविषयत्वात् । ययोश्चाभिन्नविषयत्वं तयोराखुनकुलयोरिव प्रतिनियत एव बाध्यबाधकभावः स्यात् । अतस्तदुच्यते ।

---

त्वाच्चेति । तत्कथमित्यपेक्षायां श्लोकमवतारयति उच्यत इति । अपूर्वाधिगमं कुर्वत्प्रमाणान्तरानधिगतमर्थमेव गमयत्प्रमाणं भवति । न चेदनधिगतमर्थमवगमयेदधिगतमेवावगमयेदनुवादश्रुत्यादिवत्प्रमाणमेव न भवति । तस्माद्विभिन्नार्थविषयत्वमेव प्रमाणानामङ्गीकार्यं ततश्च तत्त्वमस्यादिवाक्यप्रत्यक्षादिकयोः प्रमाणतयान्योन्यवार्त्तानभिज्ञयोर्न विरोध इत्यर्थः ॥ ८३ ॥

भिन्नविषययोर्वाक्यप्रत्यक्षयोः परस्परवार्त्तानभिज्ञतया विरोधो नास्तीत्युक्तमर्थं दृष्टान्तेन स्पष्टयितुमाह य एवमपीति । यथा रूपग्राहकशब्दग्राहकयोश्चक्षुःश्रोत्रयोर्न कोऽपि विरोधः सम्भवत्येवं प्रत्यक्षागमयोरपीत्यर्थः ॥ ८४ ॥

ननु सैवेयं ज्वालेति प्रत्यक्षं प्रभावितितिलिङ्गानुमानाद्बाध्यते तथा पदार्थत्वेनाग्नेरनुष्णत्वानुमानमुष्णत्वग्राहिप्रत्यक्षेण बाध्यते तथा न हिंस्यात्सर्वभूतानीत्यागमोऽग्नीषोमीयं पशुमालभेतेत्यागमान्तरेण बाध्यते तत्कथं प्रमाणानां विरोधाभाव इत्याशङ्क्य ययोर्ज्ञानयोरेकपदार्थोपाधौ विभिन्नस्वभावत्वालम्बनत्वं तयोर्बाध्यबाधकभावेऽपि न द्वयोः प्रा-

प्रत्यक्षं चेन्न शाब्दं स्याच्छाब्दं चेदक्षजं कथम् ।
प्रत्यक्षाभासः प्रत्यक्षे ह्यागमाभास आगमे ॥ ८५ ॥

न च प्रतिज्ञाहेतुदृष्टान्तन्याय इह सम्भवति शब्दादीनां प्रत्येकं प्रमाणत्वादत आह ।

स्वमहिम्ना प्रमाणानि कुर्वन्त्यर्थावबोधनम् ।
इतरेतरसाचिव्ये प्रामाण्यं नेष्यते स्वतः ॥ ८६ ॥

---

माण्यं बाध्यस्याभासत्वाद्बाधकस्यैव प्रमाणत्वादित्येतदाह प्रमाणानां सतामिति । प्रत्यक्षं चेदिति । यत्प्रत्यक्षसिद्धं न तच्छाब्देन बाध्यते बोध्यते वा तेन न तच्छाब्दं शब्दप्रमाणकम् । यच्च शाब्दं शब्दप्रमाणकं तदपि न प्रत्यक्षेण बाध्यते बोध्यते वा तेन न प्रमाणानां विरोधः । ययोः पुनर्बाध्यबाधकभावस्तयोरन्यतरस्यैव प्रमाणत्वमितरस्याभासत्वाद्यथेयं शुक्तिरिति प्रत्यक्षेऽभ्युपगते सतीदं रजतमिति प्रत्यक्षज्ञानं प्रत्यक्षाभासस्तथैकस्मिन्नागमेऽभ्युपगते तेनापहृतविषयोऽपर आगमाभास एवमागमप्रत्यक्षयोः प्रत्यक्षानुमानयोश्च बाध्यबाधकप्रसिद्धिर्नेतरथेत्यर्थः ॥ ८५ ॥

ननु तत्त्वमस्यादिवाक्यमप्रमाणं प्रत्यक्षादिविरुद्धार्थत्वादादित्यो यूपो यजमानः प्रस्तर इत्यादिवाक्यवदित्यनुमीयत इत्यत आह न च प्रतिज्ञेति । आदित्यो यूप इत्यादावादित्यादिपदार्थस्य पशुबन्धनाद्ययोग्यस्य यूपे पशुं बध्नातीति शेषिवाक्यविरोधादप्रामाण्यं न तु प्रमाणान्तरविरोधात् । प्रमाणानां स्वतःप्रामाण्यात्प्रमाणान्तरसंवादानपेक्षत्वात्स्वार्थावबोधमात्रेणैव प्रामाण्योपपत्तेरन्यथानवस्थाप्रसङ्गाच्चेत्यर्थः । अथवा । प्रतिज्ञाहेतुदृष्टान्तानां यथान्योन्यापेक्षयैवार्थावबोधकत्वं तथा प्रत्यक्षानुमानादीनामपीत्याशङ्क्याह न च प्रतिज्ञेति । प्रतिज्ञादीनां प्रमाणावयवत्वादन्योन्यापेक्षया बोधकत्वेऽपि प्रत्यक्षादीनां स्वत एव प्रमाणत्वान्नेतरेतरापेक्षा । इतरेतरापेक्षया प्रामाण्ये सति स्वतः प्रामाण्यभङ्गप्रसङ्गादेकप्रमाणत्वप्रसङ्गाच्चेत्यर्थः ॥ ८६ ॥

न च सुखदुःखादिसम्बन्धोऽवगत्यात्मनः प्रत्यक्षादिप्रमाणैर्गृह्यते येन विरोधः प्रत्यक्षादिप्रमाणैरुद्भाव्यते । कथम् । शृणु ।

दुःखितावगतौ चेत्स्यान्न प्रमीयेत सात्मवत् ।
कर्मण्येव प्रमा न्याय्या न तु कर्तर्यपि क्वचित् ॥ ८७॥

अभ्युपगमेऽपि च प्रसंख्यानशतेनापि नैव त्वं सम्भावितदोषान्मुच्यसे । अत आह ।

प्रमाणबद्धमूलत्वाद्दुःखित्वं केन वार्यते ।
अद्युष्णवन्निवृत्तिश्चेन्नैरात्म्यं ह्येति सौगतम् ॥ ८८ ॥

---

पूर्वमात्मनो दुःखित्वादेः प्रमाणान्तरग्राह्यत्वमङ्गीकृत्य न तद्विरोधात्तत्त्वमस्यादिवाक्यस्य प्रामाण्यभङ्गप्रसक्तिरित्युक्तम् । इदानीं प्रमाणान्तरग्राह्यत्वमेव नास्तीत्याह न च सुखेति । प्रतिज्ञातार्थहेतुत्वेन श्लोकमवतारयति कथं शृण्विति । सुखदुःखादिधर्माणामात्मसमवेतत्वे तेषामात्मवत्प्रमागोचरत्वं न स्यात् । धर्मित्वेनात्मनः प्रमागोचरत्वमन्तरेण तद्धर्माणां प्रमागोचरत्वायोगादात्मा च न प्रमागोचरः प्रमायाः कर्मैकगोचरत्वात्कर्मकर्तृविरोधप्रसङ्गाच्चेत्यर्थः ॥ ८७ ॥

पूर्वं प्रमाणानां भिन्नविषयत्वात्तद्दुःखित्वादेः प्रमाणगम्यत्वासम्भवाच्च प्रमाणान्तरविरोधाभावात्प्रसंख्यानविधिपरत्वं वाक्यस्य नास्तीत्युक्तम् । इदानीं दुःखित्वादेः प्रमाणगम्यत्वं तद्विरोधाद्वाक्यस्य प्रसंख्यानपरत्वं चाभ्युपगम्यापि दुःखित्वादिलक्षणात्संसारादनिर्मोक्षप्रसक्तिरित्याह अभ्युपगमेऽपि चेति । आत्मनः संसारित्वस्य प्रमाणावगतत्वेन पारमार्थिकत्वान्न केनापि तस्य निवृत्तिः सम्भवति यथाग्नेरुष्णता न केनापि वार्यते तद्वदित्यर्थः । विपक्षे दोषमाह निवृत्तिश्चेन्नैरात्म्यमिति । दुःखित्वादिपरिणामस्य परिणामिनिवृत्तिव्यतिरेकेणात्यन्तनिवृत्त्ययोगात्परिणामिनिवृत्तौ शून्यवादप्रसङ्ग इत्यर्थः । अथवा । यथाग्नेरुष्णत्वं प्रामाणि-

अथ मतम् ।

निराकुर्यात्प्रसंख्यानं दुःखित्वं चेत्स्वनुष्ठितम् ।
प्रत्यक्षादिविरुद्धत्वात्कथमुत्पादयेत्प्रमाम् ॥ ८९ ॥

ननु प्रसंख्यानं नाम तत्त्वमस्यादिशब्दार्थान्वयव्यतिरेकयुक्तिविषयबुद्ध्याम्रेडनमभिधीयते तच्चानुष्ठीयमानं प्रमितिवर्धनया परिपूर्णां प्रमितिं जनयति न पुनरैकाग्र्यवर्धनयेति । यथाशेषाशुचिनीडे स्त्रीकुणपे कामिनीति निर्वस्तुकः पुरुषायासमात्रजनितः प्रत्यय इति । तन्न । यतः ।

अभ्यासोपचयाद्बुद्धेर्यत्स्यादैकाग्र्यमेव तत् ।
नहि प्रमाणान्यभ्यासात्कुर्वन्त्यर्थावबोधनम् ॥ ९० ॥

---

कमपि निवर्त्तते तद्वद्दुःखादिकमपि निवर्त्ततामिति शङ्कित्वाऽऽग्युषणत्वस्य धर्मिनिवृत्तिव्यतिरेकेण निवृत्त्यदर्शनादिहापि दुःखित्वादेर्धर्मिनिवृत्तिव्यतिरेकेण निवृत्त्यसम्भवात्तेनैव सह निवृत्तिर्वाच्या तथा च सति शून्यवादप्रसङ्ग इति परिहरति अग्युषणवदिति ॥ ८८ ॥

नन्वनिराकृत्यैवात्मनः स्वरूपं दुःखित्वादिविपरीतप्रमामुत्पाद्य प्रसंख्यानमेव दुःखित्वादिकं निराकरिष्यतीति शङ्कते अथ मतमिति । प्रसंख्यानस्य चित्तैकाग्र्यरूपस्याप्रमाणत्वात्प्रमाणत्वेऽपि प्रत्यक्षादिविरोधान्नैवमिति परिहरति प्रत्यक्षादीति ॥ ८९ ॥

ननु प्रसंख्यानस्य प्रमोत्पादकत्वमनुपपन्नमिति कथमुच्यते तस्य तत्त्वमस्यादिवाक्यार्थज्ञानतदुपकरणयुक्त्यभ्यासरूपत्वेन प्रमितिवर्धकत्वोपपत्तेः श्रुतौ च "निदिध्यासितव्य" इत्यात्मदर्शनहेतुत्वेन तस्याङ्गीकाराल्लोके च भावनाप्रचयस्यावस्तुन्यपि प्रत्ययदार्ढ्यहेतुत्वदर्शनादिति शङ्कते ननु प्रसंख्यानमिति । तदुत्तरत्वेन श्लोकमवतारयति तन्न यत इति । प्रमाणाभ्यासोपचयस्य च पदार्थनिश्चयद्वारेण वाक्यार्थविषयास-

अभ्यासोपचिता कृत्स्नं भावना चेन्निवर्त्तयेत् ।
नैकान्तिकी निवृत्तिः स्याद्भावनाजं हि तत्फलम् ॥९१॥

अपि चाह ।

दुःख्यस्मीत्यपि चेद्ध्वस्ता कल्पकोट्युपबृंहिता ।
स्वल्पीयोऽभ्यासजा स्यात्त्वी भावनेत्यत्र का प्रमा ९२

ननु शास्त्रात्स्यात्स्तुत्वं भविष्यति । नैवम् । यथावस्थित-

---

संभावनाविपरीतभावनालक्षणप्रतिबन्धनिरासेनैवोपयोगान्निदिध्यासनस्य चैकाग्र्यजनकत्वेन चित्तविक्षेपलक्षणप्रतिबन्धनिरासकत्वात्समाहितमनसश्च प्रमाणसामग्रीतः स्वत एव प्रमोत्पत्तेः प्रत्यक्षादेश्चाभ्यासापेक्षया प्रमितिजनकत्वादर्शनान्न साक्षात्प्रसंख्यानस्य प्रमोत्पादकत्वमित्यर्थः ॥ ९० ॥

नन्वभ्यासजनिताया भावनायाः समस्तसांसारिकदुःखनिवर्त्तनेन ब्रह्मरूपताप्राप्तिहेतुत्वं "स यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवती"ति श्रूयत इति शङ्कते अभ्यासोपचितेति । सत्यं श्रूयते सा तु प्राप्तिरात्यन्तिकी न भवति भावनाजन्यत्वेनानित्यत्वादिति परिहरति नैकान्तिकीति ॥ ९१ ॥

किमु वक्तव्यमिति न्यायान्तरं दर्शयति अपि चाहेति । अनादिकालप्रवृत्ताप्यहं सुखी दुःखीति भावना ध्वस्ता चेदल्पकालाभ्यासजनिता ब्रह्मभावना निवर्त्तेत इति किमु वक्तव्यं तथात्वेऽपि स्यात्स्तुत्वे प्रमाणाभावादित्यर्थः ॥ ९२ ॥

ननु का प्रमेति कथमभिधीयते सगुणोपासनाफलत्वेन "न च पुनरावर्त्तत" इत्यनावृत्तेः श्रूयमाणत्वादिति शङ्कते ननु शास्त्रादिति । तत्रापि शास्त्रस्य पदार्थशक्त्याधानकारित्वायोगान्न च "न च पुनरावर्त्तत" इत्यादेरपि शास्त्रस्य नित्यत्वबोधकत्वमेवेति वाच्यम् । तथा च सति "नास्त्यकृतः कृतेने"त्यादिश्रुतिसहकृतस्य भावनाजन्यत्वेनानित्यत्वानुमानस्य बलवत्तरत्वादनावृत्तिश्रुतेश्च ज्ञानद्वारापेक्षयापि सम्भवान्न

वस्तुयाथात्म्यावबोधमात्रकारित्वाच्छास्त्रस्य । नहि पदार्थशक्त्याधानकृच्छास्त्रम् । प्रसिद्धं च लोके ।

भावनाजं फलं यत्स्याद्यच्च स्यात्कर्मणः फलम् ।
न तत्स्यास्थिवति मन्तव्यं द्रविडेष्विव सङ्गतम् ॥९३॥

यद्यपि प्रत्यक्षादिप्रमाणोपात्तमात्मनो दुःखित्वं तथापि तत्त्वमस्यादिवाक्योत्थप्रत्यय एव बलीयानिति निश्चयोऽव्यभिचारिप्रामाण्यवाक्योपात्तत्वात्प्रमेयस्य च स्वत एव निर्दुःखित्वसिद्धेः । प्रत्यक्षादेस्तु सव्यभिचारित्वात्सम्भावनायाश्च पुरुषपरिकल्पनामात्रावष्टम्भत्वाच्चेति ।

---

च पुनरावर्तत इत्यस्य न नित्यत्वबोधकत्वमिति परिहरति नैवमिति । किंच भावनाजन्यफलस्यानित्यत्वं प्रसिद्धं तस्मादपि शास्त्रान्न नित्यत्वं प्रतिपत्तुं शक्यत इत्यत्र श्लोकमवतारयति प्रसिद्धं चेति ॥ ९३ ॥

पूर्वं प्रमाणानां परस्परविरोधाभावाद्दुःखित्वस्य प्रमाणान्तरायोग्यत्वात्तत्त्वमस्यादिवाक्यस्य मानान्तराविरुद्धार्थतया प्रसंख्यानपरत्वं निराकृतमिदानीं दुःखित्वस्य प्रत्यक्षादिसिद्धतामभ्युपगम्यापि तत्त्वमस्याद्यागमजन्यज्ञानमेव मानान्तरसिद्धार्थबाधकं स्यादित्याह यद्यपीति । कुतस्तस्यैव बाधकत्वमपीत्यत आह अव्यभिचारीति । अपौरुषेयत्वेनासम्भाविताशेषपुरुषदोषवाक्यजन्यत्वादित्यर्थः । इतश्चागमजन्यज्ञानस्य बाधकत्वमित्याह प्रमेयस्य चेति । आत्मनः सुषुप्त्यादौ स्वयंप्रकाशमानतया निर्दुःखित्वस्य सिद्धत्वाद्दुःखित्वग्राहिप्रत्यक्षस्य बाध्यत्वमित्यर्थः । इतश्च तस्यैव बाध्यत्वमित्याह प्रत्यक्षादेस्त्विवति । प्रत्यक्षादेः सम्भावितदोषत्वाद्दुःखित्वग्राहिप्रत्यक्षस्य बाध्यत्वमित्यर्थः । यद्वा । सुषुप्त्यादावात्मनि प्रकाशमानेऽपि दुःखित्वग्राहिप्रत्यक्षादेर्व्यभिचारित्वाद्बाध्यत्वमित्यर्थः । इतश्च दुःखित्वप्रतिपत्तिर्बाध्येत्याह सम्भावनायाश्चेति । आत्मनो दुःखित्वस्य सम्भावनामात्रसिद्धत्वादपि तद्ग्राहिप्रत्यक्षादेर्बाध्यत्व-

निर्दुःखित्वं स्वतःसिद्धं प्रत्यक्षादेश्च दुःखिता ।
को ह्यात्मानमनादृत्य विश्वसेद्बाह्यमानतः ॥ ९४ ॥

सम्बन्धार्थ एव ।

अपि प्रत्यक्षबाधेन प्रवृत्तिः प्रत्यगात्मनि ।
"पराञ्चि खानी"त्येतस्माद्वचसो गम्यते श्रुतेः ॥९५॥

अभ्युपगम्यैवमुच्यते । ननु प्रमाणं सत्प्रमाणान्तरेण विरुध्यत इत्यसकृदवोचाम । यत्रापि वाक्यप्रत्यक्षयोर्विरोधाशंका तत्रापि पुरुषमोहवशादेव सा जायते न तु परमार्थत इति । अत आह ।

प्रमां चेज्जनयेद्वाक्यं प्रत्यक्षादिविरोधिनीम् ।
गौणीं प्रत्यक्षतां ब्रूयान्मुख्यार्थासम्भवाद्बुधः ॥ ९६ ॥

---

मित्यर्थः । ननु स्वतःसिद्धात्प्रत्यक्षादिसिद्धस्यैव प्राबल्यं किं न स्यादित्यत आह को हीति । निर्दुःखित्वं निर्दोषागमवाक्यात्स्वत एव प्रतीयते दुःखित्वं तु सम्भावितदोषात्प्रत्यक्षादेः परत एव प्रतीयते तत्र निर्दोषसदोषप्रमाणाभ्यां स्वतः परतः प्रतिपन्नयोर्निर्दोषप्रमाणेन स्वतःप्रतिपन्नेऽविभ्रमः कर्तव्य इत्यर्थः ॥ ९४ ॥

पूर्वश्लोकसम्बन्धग्रन्थोक्तार्थे श्रुतिप्रतिपादनायोत्तरश्लोक इत्याह सम्बन्धेति । प्रत्यक्षबाधेन प्रत्यगात्मनि श्रुतेः प्रवृत्तिरित्येषोऽर्थः "पराञ्चि खानी"त्येतस्माद्वचसो गम्यते । "तस्मात्पराङ्पश्यति नान्तरात्मन्नि"ति प्रत्यगात्मनः प्रत्यक्षाद्ययोग्यत्वकथनादित्यर्थः ॥ ९५ ॥

अभ्युपगमवादमिदानीं त्यजति अभ्युपगम्यैवमिति । ननु प्रमाणं सत्प्रमाणान्तरेण न विरुध्यत इति कथमुच्यते तत्त्वमस्यादिवाक्यदुःखित्वादिप्रत्यक्षयोर्विरोधदर्शनादित्याशङ्क्य तत्रापि प्रमाणवृत्त्यपरिज्ञानादेव विरोधाशङ्का पुरुषस्य जायते न तु परमार्थतस्तयोर्विरोधोऽस्तीत्याह यत्रापीति । कथमेवं निश्चीयत इत्याशङ्क्य श्लोकमवतारयति अत आहेति ।

तस्यार्थस्य सुखप्रतिपत्त्यर्थमुदाहरणम् ।

अग्निः सम्यगधीतेऽसौ जहासोच्चैश्च मञ्चकः ।
यथा तद्वदहंवृत्त्या लक्ष्यतेऽनर्हयापि सः ॥ ९७ ॥

कस्मात्पुनः कारणात्साक्षादेवात्मा नाभिधीयते किमनया कल्पनयेति तत्राह ।

त्वमित्येतद्विहायान्यन्न वर्त्मात्मावबोधने ।
समस्तीह त्वमर्थोऽपि गुणलेशेन वर्त्तते ॥ ९८ ॥

---

अहं दुःखीत्यात्मनो दुःखित्वप्रत्यक्षतां गौणीं ब्रूयादन्तःकरणगतदुःखित्वप्रत्यक्षतावद्गुणयोगात्प्रत्यगात्मनि वर्त्तत इति ब्रूयात् । स्वयंप्रकाशचैतन्यस्वभावस्यात्मनो दुःखित्वादिपरिणामित्वासम्भवेन तस्मिन्दुःखीति प्रत्यक्षस्य मुख्यार्थतायोगात्ततश्चैतन्यस्वभावस्यात्मनो ब्रह्मत्वबोधकेन तत्त्वमस्यादिवाक्येन सह दुःखित्वप्रत्यक्षस्य न विरोध इत्यर्थः ॥ ९६ ॥

अहं दुःखीतिप्रत्ययेन गुणवृत्त्यात्मोच्यत इत्येतद्दृष्टान्तेन प्रतिपादयतीत्याह तस्यार्थस्येति । अग्न्यादिशब्देनाध्येतृचेतनाभिधानानर्हेण माणवको लक्ष्यते यथा तद्वत्स्वयंप्रकाशचैतन्याभिधानानर्हयाहंवृत्त्यात्मा लक्ष्यत इत्यर्थः ॥ ९७ ॥

ननु मुख्यया वृत्त्यात्मनोऽभिधायकं पदमस्ति न वा । नास्ति चेन्न लक्ष्यत्वं स्वशब्दवाच्यस्यैव लोकेऽन्यपदलक्ष्यत्वदर्शनात् । अस्ति चेत्तेनैवाभिधीयतां किमनया लक्षणाकल्पनयेति शङ्कते कस्मात्पुनरिति । तदुत्तरत्वेन श्लोकमवतारयति तत्राहेति । त्वमहमित्येतत्पदं विहायात्मावबोधने पदान्तरं न सम्भवति । तच्च त्वमहमादिपदं गुणलक्षणयोरन्यतरवृत्त्यैवात्मनि वर्त्तते न तु मुख्यया वृत्त्यात्माभिधायकं पदान्तरमस्ति । तथापि नालक्ष्यत्वप्रसङ्गो वाच्यत्वस्य लक्ष्यत्वाप्रयोजकत्वान्मुख्यार्थसम्बन्धो विवक्षितार्थप्रतिपत्त्युपयोगित्वाल्लक्ष्यत्वे प्रयोजको न तु वाच्यत्वमुक्तप्रयोजकसद्भावे वाच्यत्वाभावापराधेन लक्ष्यत्वाभावादर्शनादात्मनश्च "यतो वाचो निवर्त्तन्त" इत्यादिश्रुतेर्जात्याद्यभावाच्च

कस्मात्पुनर्हेतोरहमित्येतदपि गुणलेशेन वर्त्तते न पुनः साक्षादेवेति । विधूतसर्वकल्पनाकारणस्वाभाव्यादात्मनः । अत आह ।

व्योम्नि धूमतुषाराभ्रमलिनानीव दुर्धियः ।
कल्पयेयुस्तथा मूढाः संसारं प्रत्यगात्मनि ॥ ९९ ॥

ननु सर्वकल्पनानामप्यात्मन्यत्यन्तासम्भवे समानेऽहंवृत्तौ कः पक्षपाते हेतुर्येन वृत्त्यन्तराणि विधूयाहंवृत्त्यैवात्मोपलक्ष्यत इति । उच्यते ।

चिन्निभेयमहंवृत्तिः प्रतीचीवात्मनोऽन्यतः ।
पूर्वोक्तेभ्यश्च हेतुभ्यस्तस्मादात्मानयोच्यते ॥ १०० ॥

---

निरुपाधिकस्य वाच्यत्वानुपपत्तेस्त्वमहमादिशब्दवाच्यप्रमातृसाक्षितया तत्सम्बन्धस्य भावादभीष्टसर्वप्रत्यक्त्वप्रतिपत्तिप्रयोजनभावात्त्वमहमादिशब्दवाच्यान्तःकरणोपाधावेव स्फुटतरव्यवहारयोग्यत्वात्तद्वाचकशब्दैरात्मा लक्ष्यत इत्यर्थः । त्वंप्रमातार्थो यस्य शब्दस्य स त्वमर्थस्त्वंशब्द इति यावत् ॥ ९८ ॥

ननु त्वमहमादिपदानां प्रत्यङ्मात्रवाचित्वात्साक्षादेवात्माभिधीयतां किं तत्र लक्षणाकल्पनयेति शङ्कते कस्मात्पुनर्हेतोरिति । तत्र वाच्यवाचककल्पनानां कारणभूतगुणक्रियादीनां वस्तुतोऽभावादिति श्लोकमवतारयन्परिहरति विधूतेति । संसारशब्दप्रवृत्तिनिमित्तभूतं षष्ठ्यादिकमित्यर्थः ॥ ९९ ॥

नन्वहङ्कारस्येव देहघटादेरप्यात्मन्यधिष्ठाने कल्पितत्वाविशेषात्तद्वाचकैरपि शब्दैरात्मा कस्मान्न लक्ष्यत इत्याशङ्क्य श्लोकेनोत्तरमाह नन्वित्यादिना । अहंवृत्तिर्ह्यात्मविवर्त्ततया तप्तायःपिण्डवच्चिन्मयी भवति । आत्मनो यदन्यत्तस्माच्चिद्व्यतिरिक्तपदार्थेभ्यः प्रतीचीव प्रत्यग्भूतेव भवति । यद्वा । आत्मनः प्रत्यगात्मनः समनन्तरमन्यत्तो देहादिभ्यः प्रत्य-

वृत्तिभिर्युष्मदर्थाभिर्लक्ष्यते चेद्दृशिः परः ।
अनात्मत्वं भवेत्तस्य वितथं च वचः श्रुतेः ॥ १०१ ॥

यथोक्तेन ।

अनेन गुणलेशेन ह्यत्यहङ्कर्तृकर्म या ।
लक्ष्यतेऽसावहंवृत्त्या नाञ्जसात्राभिधीयते ॥ १०२ ॥

नाञ्जसात्राभिधीयत इति को हेतुरिति चेत् ।

षष्ठीगुणक्रियाजातिरूढयः शब्दहेतवः ।
नात्मन्यन्यतमोऽमीषां तेनात्मा नाभिधीयते ॥१०३॥

---

ग्भूतेव भवति । यद्वा । स्वस्मादन्यतोऽन्यस्मात्प्रतीचि प्रत्यगात्मनीव स-र्वान्तरत्वं भातीति यस्मात्तस्मादात्मना चाविनाभावमित्यादिपूर्वोक्तहे-तुभ्यश्च तच्छब्दैरेवात्मा लक्ष्यत इत्यर्थः ॥ १०० ॥

विपक्षे दोषमाह वृत्तिभिरिति । घटादिवृत्तिभिस्तदभिधानैश्चात्मनो लक्ष्यत्वे घटादिवदनात्मत्वस्यैव प्रतीतिप्रसङ्गाद्ब्रह्मात्मत्वेन प्रतीतिर्न स्यात्तथा चाहं ब्रह्मास्मितत्त्वमस्यादिवाक्यानामेकत्वप्रतिपादकानां वै-यर्थ्यमपुरुषार्थपर्यवसायित्वं च स्यादित्यर्थः ॥ १०१ ॥

उक्तार्थनिगमनपरं श्लोकमाकाङ्क्षितपदं पूरयन्नवतारयति यथोक्ते-नेति । अहङ्कर्तारं प्रमातारं तत्कर्म च देहघटादिकमतीत्य या वर्त्तते कूटस्थचिन्निभा याहंवृत्तिस्तया । यद्वा । अतिशयेनाहंकर्त्तैव कर्मविषयो यस्यास्तयासौ प्रत्यगात्मा लक्ष्यते । अत्रात्मन्यञ्जसा साक्षादभिधावा-च्यत्वं यतो न सम्भवति तत इत्यर्थः । गुणलेशेनेति हेतौ तृतीया ॥१०२॥

ननु हेत्वभिधानमन्तरेणात्मनि नाभिधायकः शब्द इति न शक्यते वक्तुमित्याशङ्क्य शब्दप्रवृत्तिनिमित्तानां सम्बन्धादीनामात्मन्यसम्भवो हेतुरिति श्लोकेन परिहरति नाञ्जसात्राभिधीयत इत्यादिना । षष्ठीति । यद्वाच्यः सम्बन्ध इत्यर्थः । क्वचित्षष्ठ्यर्थः सम्बन्धः शब्दप्रवृत्तिनिमित्तं यथा राजपुरुष इत्यादिः । क्वचिद्गुणयोगो यथा शुक्लः पट इत्यादिः । क्व-चित्क्रियायोगो यथा पाचक इत्यादिः । क्वचिज्जातियोगो यथा गौरश्वः

यदि शब्दोऽभिधानाभिधेयत्वसम्बन्धाङ्गीकारेण नात्मनि वर्तते कथं शब्दादहंब्रह्मास्मीति सम्यग्बोधोत्पत्तिः । उच्यते ।

असत्ये वर्त्मनि स्थित्वा निरुपायमुपेयते ।
आत्मत्वकारणाद्विद्भो गुणवृत्त्या विबोधिताः ॥१०४॥

कथं पुनरभिधानमभिधेयेनानभिसम्बद्धं सदनभिधेयेऽर्थे प्रमां जनयतीति । शृणु यथानभिसम्बद्धमप्यनभिधेयेऽर्थेऽविद्यानिराकरणमुखेन बोधयतीत्याह ।

शयानाः प्रायशो लोके बोध्यमानाः स्वनामभिः ।
सहसैव प्रबुध्यन्ते यथैवं प्रत्यगात्मनि ॥ १०५ ॥

---

पुरुष इत्यादिः । क्वचिद्रूढिर्यथाकाशो द्युरभ्र इत्यादिः । एतेषां शब्दप्रवृत्तिनिमित्तानामन्यतमस्याप्यात्मन्यसङ्गत्वादगुणत्वादविक्रियत्वादसामान्यत्वात्प्रमाणान्तरायोग्यत्वेनागृहीतसम्बन्धत्वाच्चाभावान्नाभिधेय आत्मेत्यर्थः ॥ १०३ ॥

आत्मनः परमार्थतः पदेन वाच्यवाचकलक्षणसम्बन्धाभावे पदविषयत्वाभावाद्वाक्यात्सम्यग्बोधोत्पत्तिर्न स्यादित्याशङ्क्य परिहरति यदीत्यादिना । असत्य आरोपितरूपे वर्त्मन्युपाये शबलात्मनि स्थित्वावस्थाय निरुपायं सत्ताप्रतीतौ साक्षादुपायरहितमात्मतत्त्वमुपेयते प्राप्यते यथा शाखाग्रे चन्द्रो यथा रेखाभिः सत्या वर्णा इत्यर्थः । तथापि प्रमाणान्तरसिद्धस्य लोके लक्ष्यत्वदर्शनात्तस्य प्रमाणान्तरासिद्धस्य लक्षणयाप्यवगतिर्नोपपद्यत इत्याशङ्क्यात्मत्वादेव हेतोः स्वप्रकाशतया सिद्धत्वाल्लक्षणावृत्त्या तदवगतिरुपपद्यत इत्याह आत्मत्वकारणादिति ॥ १०४ ॥

उपायमात्रस्योपेयेन सत्यसम्बन्धरहितस्य बोधकत्वेऽप्यभिधानस्यागृहीतसम्बन्धस्य बोधकत्वं क्वापि न दृश्यत इति विशेषमाशङ्क्य सम्बन्धग्रहणमन्तरेणापि बोधकत्वं यथोच्यते तथा शृण्वित्याह कथं पुनरित्यादिना । यथा निद्रितः पुमानुत्तिष्ठ देवदत्तेत्यामन्त्रणशब्देनागृह्यमाणा-

**नहि नाम्नास्ति सम्बन्धो व्युत्थितस्य शरीरतः ।**
**तथापि बुध्यते तेन यथैवं तत्त्वमित्यतः ॥ १०६ ॥**

यथा च ।

**बोधाबोधौ नभोऽस्पृष्ट्वा कृष्णधीनीडगौ यथा ।**
**बाध्येतरात्मकौ स्यातां तथेहात्मनि गम्यताम् ॥१०७॥**

---

भिधेयसम्बन्धेनैव बोध्यमानः प्रबुध्यते तद्वत्तत्त्वमस्यादिनाप्यविद्यया निद्रितः पुमानगृह्यमाणसम्बन्धेनैव बोध्यमानः प्रबुध्यत इत्यर्थः ॥ १०५ ॥

ननु नामभिः पूर्वसम्बन्धग्रहणमस्त्येव तस्माद्गृहीतसम्बन्धानामेव तेषां तत्रापि बोधकत्वमित्यत आह नहीति । शरीराद्व्युत्थितस्य देहेन्द्रियाभिमानरहितस्य सुषुप्तस्य स्ववाचकशब्दश्रवणसम्बन्धस्मरणयोरभावात्तद्भावे च सति शरीरसम्बन्धे प्रतिबोधः प्रतिबोधे सति शरीरसम्बन्धः । अथवा । प्रतिबोधे सति श्रवणं श्रवणाच्च प्रतिबोध इति परस्पराश्रयत्वप्रसङ्गादस्मर्यमाणसम्बन्धस्यैव बोधकत्वं सुषुप्तावङ्गीकर्तव्यं तस्माद्वाचकशब्दस्य वाच्य एव सम्बन्धज्ञानापेक्षा न लक्ष्ये । अन्यत्रगृहीतसम्बन्धस्यापि गङ्गाशब्दस्य सम्बन्धग्रहणं विनैव तीरादौ बुद्धिजनकत्वप्रदर्शनादेवं शबलेऽपि गृहीतसम्बन्धानामपि तत्त्वमस्यादिशब्दानां लक्षणयाखण्डैकरसपर्यवसायित्वं नानुपपन्नमिति भावः ॥ १०६ ॥

ननु भवत्वेवं शब्दादात्मनि ज्ञानोत्पत्तिस्तथापि निवर्त्यनिवर्तकाज्ञानज्ञानाश्रयत्वादात्मनः सविकारत्वं प्राप्तमित्याशङ्क्य दृष्टान्तेनैव तन्निराचष्टे यथा चेति । अमूर्त्तत्वान्नीरूपमाकाशमिति बोधो नीलोत्पलदलवन्नीलमित्यबोधस्तौ यथा नभो गगनमस्पृष्ट्वा विकारमकृत्वैव बाध्यबाधकौ स्याताम् । कथं तर्हि तयोरप्यन्तरेण विषयगतमतिशयं निवर्त्यनिवर्त्तकभावः स्यादित्याशङ्क्याह कृष्णधीनीडगाविति । कृष्णाकारा धीः कृष्णधीस्तस्या नीडमालम्बनं विषय इति यावत् । तद्गतौ तद्विषयौ नीरूपं रूपवच्चेति विरुद्धाकाराकारितौ तावन्मात्रस्यैव यथा निवर्त्यनिवर्त्तकौ भवतस्तथात्मानमविकृत्यैव संसार्यसंसारीति बोधाबोधौ निवर्त्यनिवर्त्तकौ स्यातामित्यर्थः ॥ १०७ ॥

"असत्ये वर्त्मनि स्थित्वे"त्युपश्रुत्यातिविस्मितो महता सम्भ्रमेण कश्चिच्चोदयति ।

नासन्नुपायो लोकेऽस्ति परमार्थविनिश्चये ।
नासल्लिङ्गाद्धि बाष्पादेः कश्चिदग्निं प्रपद्यते ॥ १०८ ॥
इत्येवं चोदयेद्योऽपि जोषयेत्तं घटादिना ।
सदसद्भ्यां विभक्तोऽसौ पर्यायश्च न चानयोः ॥१०९॥

एवं कुचोद्यमुन्मूल्याथेदानीं प्रकृतमभिधीयते । प्रकृतं

---

ननु यस्य यद्रूपं मिथ्या तस्य तत्प्रयुक्तकार्यकरत्वं नास्ति यथा बाष्पधूमस्य धूमत्वाभावान्न तत्प्रयुक्ताग्निगमकत्वमेवं श्रुत्याचार्यादेस्तद्रूपेण मिथ्यात्वान्न तत्प्रयुक्तबोधहेतुत्वसम्भव इति चोदयतीत्याह असत्ये वर्त्मनि स्थित्वेत्युपश्रुत्येत्यादिना ॥ १०८ ॥

परिहरति इत्येवमिति । ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य घटपटादेः प्रपञ्चस्य मायामयत्वाङ्गीकारात्तस्य चार्थक्रियाकारित्वे तवाप्यविवादात्तुच्छतायाश्च मयेव त्वयाप्यनङ्गीकाराद्घटादिनैव दृष्टान्तेन प्रीणातु भवानित्यर्थः । दृष्टान्तोऽप्यसंप्रतिपन्न इति मन्वानं प्रत्याह सदसद्भ्यामिति । नहि घटादिः सन्नास्तीत्यपि दर्शनान्नाप्यसन्नभावप्रतियोगित्वात्ततः सदसद्भ्यां विलक्षण इत्यर्थः । तर्हि क्रमेण सत्त्वमसत्त्वं चेत्याशङ्क्याह पर्यायश्च न चानयोरिति । यस्मिन्धर्मिणि सत्त्वासत्त्वयोः क्रमेण समावेश इष्यते तस्य सत्त्वेऽसत्त्वे च न समावेशः सम्भवति वैयर्थ्याद्विरोधाच्चोभयविलक्षणत्वे चानिर्वचनीयता बलादापतति । बाष्पधूमादेस्त्वव्याप्तत्वादेवागमकत्वं प्रमेयत्वादिवन्न त्वसत्यत्वादसत्यस्यापि प्रतिबिम्बवर्णदैर्घ्यादेर्गमकत्वदर्शनात्सत्यस्यापि घटपटादेरव्याप्तस्य गमकत्वादर्शनाच्चेति भावः ॥ १०९ ॥

वृत्तकीर्त्तनपूर्वकं वर्त्तिष्यमाणस्य तात्पर्यमाह एवमिति । कारणान्तरमिति । अविद्यानिरासिज्ञानोत्पादकशब्दशक्त्यालोचनयागृहीतसम्बन्धस्यापि निवर्त्तकत्वं पूर्वमुदितमिदानीं निवर्त्याविद्यास्वभावपर्यालो-

चानभिधेये कथमभिधाश्रुतिरविद्याध्वंस्यात्मनि ज्ञानं जनयतीति । तत्रैव कारणान्तरमुच्यते ।

अतिदुःस्थोऽप्रबोधोऽत्र ह्यात्मैवास्य प्रबुद्धता ।
निमित्तमात्राद्ध्येत्येषा नासाग्रे बदरं यथा ॥ ११० ॥

अनुदितानस्तमितकूटस्थबोधमात्रस्वाभाव्यादात्मनो दुःसम्भाव्योऽविद्यासद्भाव इति चेन्नाविद्याप्रसिद्ध्यैव तत्सद्भावसिद्धेरुलूकनिशावदित्यत इदमुच्यते ।

अहो धार्ष्ट्यमविद्याया न कश्चिदतिवर्त्तते ।
प्रमाणं वस्त्वनाहत्य परमात्मेव तिष्ठति ॥ १११ ॥

यस्मादविद्याप्रसिद्ध्यैवाविद्यासद्भावसिद्धिरत आत्मवस्तु

---

चनयापि तदुपपन्नमित्युच्यत इत्यर्थः । अतिदुःस्थतामेवोपपादयति आत्मैवेति । अनुदितानस्तमितप्रकाशस्वभाव आत्मन्यबोधः स्वप्रकाशस्वभावे सवितरीव तमःप्रतिभासव्यतिरेकेण वस्तुतो नोपपन्नस्तेन यत्किंचिन्निमित्तमासाद्य नासाग्रस्थबदरमिव व्येत्यपगच्छतीत्यर्थः ॥ ११० ॥

ननु तर्ह्युक्तयुक्तिबलान्न भवेदात्मन्यविद्येति चोद्यमुद्भाव्य प्रसिद्धत्वेन तस्याः सद्भावापह्नवायोगान्नित्यपरतन्त्रतया प्रतीतेः स्वातन्त्र्यायोगाज्जडाश्रयत्वस्य च निरस्तत्वादहमज्ञो मामन्यं च न जानामीति भासानुसारेणात्माश्रयत्वमेष्टव्यमिति परिहरति अनुदितेत्यादिना । उलूकनिशावदिति । यथा प्रमाणतर्काभ्यां स्वप्रकाशस्वभावस्याह्नो रात्रित्वासम्भवेऽप्युलूकानामपरोक्षत्वादह्न एव रात्रित्वं तद्वत्प्रमाणतर्काभ्यामात्मन्यविद्यासद्भावाभावेऽप्यपरोक्षत्वादस्तीत्यभ्युपेयमित्यर्थः । धार्ष्ट्यमेवोपपादयति प्रमाणमिति । प्रमाणं वस्तु वृत्तं चानपेक्ष्य स्वयमेव परमार्थवदवभासते तस्मादविद्याया धार्ष्ट्यं विद्वानीश्वरोऽपि नातिवर्त्तितुं शक्नोतीत्यर्थः ॥ १११ ॥

ननु प्रसिद्धबलाच्चेदात्मन्यविद्याभ्युपेयते तर्हि प्रसिद्धेः सार्थकत्वाय

वृत्तानुरोधेन न कथञ्चनापि तत्सम्भावनाप्यस्ति यत आह ।

ज्ञानं यस्य निजं रूपं क्रियाकारकवर्जितम् ।
सम्भावनाप्यविद्यायास्तत्र स्यात्केन हेतुना ॥ ११२ ॥

सोऽयमेवमनुदितानस्तमितावगतिमात्रशरीर आत्मापि सन्नविचारितप्रसिद्धाविद्यामात्रव्यवहित एवातथैवेक्ष्यते यतोऽतः ।

अनुमानादयं भावाद्व्यावृत्तोऽभावमाश्रितः ।
ततोऽप्यस्य निवृत्तिः स्याद्वाक्यादेव बुभुत्सतः॥११३॥

भाववदभावादपि निवृत्तिरनुमानादेव किमिति न भवतीति चेच्छृणु ।

---

वास्तव एव सद्भावः किं न स्यादित्याशङ्क्य युक्तिबलान्नैवमित्याह यस्मादित्यादिना । ननु ज्ञानस्य जन्यत्वात्परिणामादिक्रियावत्त्वाच्च कथमात्मरूपत्वमित्यत आह क्रियाकारकेति ॥ ११२ ॥

ननु भवत्वेवमविद्यासद्भावः प्रसिद्धिबलादात्मनि तथापि कथं तन्निवृत्तिरित्याकाङ्क्षायां पूर्वोक्तान्वयव्यतिरेकलक्षणानुमानोपकृताद्वाक्यादिति श्लोकतात्पर्यकथनपूर्वकमवतारयति सोऽयमित्यादिना । पूर्वमात्मत्वेन गृहीताद्देहेन्द्रियात्मकाद्भावादन्वयव्यतिरेकलक्षणानुमानाद्व्यावृत्तो देहादिरात्मा न भवतीति विविक्तत्वेनाधिगतोऽयमात्माभावरूपदेहादिभ्यो व्यावृत्तत्वेनाधिगतत्वादेवाभावमाश्रितोऽभावरूपतामिवापन्नो भवतीति शेषः । स्वरूपनिर्धारणाभावादतः सत्त्वेन प्रतिपन्नदेहादिभ्यो व्यावृत्तस्य कोऽस्मीति बुभुत्सोरस्य वाक्याद्ब्रह्मात्मत्वप्रतिपत्तौ सत्यां विशेषस्वरूपनिर्धारणादभावाद्व्यावृत्तिः स्यात्ततोऽन्वयव्यतिरेकसहकृताद्वाक्यादविद्यानिवृत्तेरित्यर्थः ॥ ११३ ॥

ननु देहाद्व्यावृत्तिर्यथानुमानात्सिद्ध्यति तद्वदभावो नात्मादृश्यत्वा-

न व्यावृत्तिर्यथा भावाद्भावेनैवाविशेषतः ।
अभावादप्यभावत्वाद्व्यावृत्तिर्न तथेष्यते ॥ ११४ ॥

यतो नानुमानेन व्याविद्धाशेषक्रियाकारकफलात्मनि स्वाराज्येऽभिषेक्तुं शक्यते तस्मात् ।

अविद्यानिद्रया सोऽयं प्रसुप्तो दुर्विवेकया ।
भावाभावव्युदासिन्या श्रुत्यैव प्रतिबोध्यते ॥ ११५ ॥

अत्राहानुदितानस्तमितविज्ञानात्ममात्रस्वरूपत्वाद्दुःसम्भाव्या विद्येति । नैतदेवम् । कुतः । यत आह ।

कुतो विद्येति चोद्यं स्यान्नैव प्राग्घेत्वसम्भवात् ।
कालत्रयापरिच्छित्तेर्न चोर्ध्वं चोद्यसम्भवः ॥ ११६ ॥

---

देहादिवदित्यभावाद्व्यावृत्तिरप्यनुमानात्सिद्ध्यति ततः कथमन्वयव्यतिरेकसहकृताद्वाक्यादात्मावगतिः स्यादित्युच्यत इति शङ्कोत्तरत्वेन श्लोकमवतारयति भाववदित्यादिना । भावाद्देहेन्द्रियाद्यात्मलक्षणाद्यथात्मनो व्यावृत्तिर्न भावत्वाकारेणैव भवत्युभयोर्भावस्वभावत्वाविशेषात् किन्तु द्रष्टृदृश्यादिचतुर्विधान्वयव्यतिरेकलक्षणानुमानबलादेव निश्चीयत एवमभावाद्देहाद्यात्मवैधुर्यादनुमानविषयीकृताद्व्यावृत्तिरनुमानेनैव न प्रतीयतेऽनुमानविनिश्चिताभावत्वादेव ततो भावाभावविलक्षणब्रह्मरूपत्वप्रतिपादकवाक्यादेवाभावव्यावृत्तिप्रतीतिरिति भावः ॥ ११४ ॥

फलितार्थमुपसंहरति यत इत्यादिना । दुर्विवेकया प्रमाणान्तरेण निवर्त्तयितुमशक्ययेत्यर्थः ॥ ११५ ॥

पूर्वोक्तमनवबोधमुद्भाव्य प्रकारान्तरेण परिहरति अत्राहेत्यादिना । किमनुदितायां विद्यायामविद्या न सम्भवतीति चोद्यमुतोदितायां । नाद्यस्तदानीमात्मनोऽनुदितानस्तमितविज्ञानस्वभावतयानवगमादेवंभूते कथमविद्येति चोद्यानवतारादविद्यानुभवविरोधाच्च । नापि द्वितीय आत्मन्यविद्या नासीदस्ति भविष्यतीत्यवगतेस्तादृशचोद्यानवसरत्वादित्यर्थः ॥ ११६ ॥

यस्मात्तत्त्वमस्यादिवाक्यमेवात्मनोऽशेषामविद्यां निरन्वयामपनुदति तस्मात्।

अज्ञातममनादृत्य प्रमाणं सदसीति ये।
बुभुत्सन्तोऽन्यतः कुर्युस्तेऽक्ष्णापि रसवेदनम् ॥११७॥

एवमप्रतिहतामहंब्रह्मेतिप्रमां तत्त्वमस्यादिवाक्यं कुर्वदपि न प्रतिपादयतीति चेदभिमतं न कुतश्चनापि प्रतिपत्तिः स्यादत आह।

इदं चेदनृतं ब्रूयात्सत्यामवगतावपि।
न चान्यत्रापि विश्वासो ह्यवगत्यविशेषतः ॥ ११८ ॥

न चोपादित्सिताद्वाक्यार्थाद्वाक्यार्थान्तरं कल्पयितुं युक्तं यस्मात्।

---

प्रसंख्यानादीनां नाविद्यानिवर्त्तकत्वमित्युपसंहरति यस्मादित्यादिना। अज्ञातमं साक्षादात्मतत्त्वप्रमितिसमर्थतया निश्चिततमं तत्त्वमस्यादिवाक्यमनादृत्य प्रसंख्यानादिनात्मतत्त्वं येऽवगन्तुमिच्छन्तः प्रवर्त्तन्ते ते चक्षुरिन्द्रियेण रसविशेषान्प्रतिपत्तुमिच्छन्तीत्यर्थः ॥ ११७ ॥

उक्तन्यायेन वेदान्तानां प्रामाण्योपपत्तावपि यदि वैयर्थ्यादप्रामाण्यं ब्रूयात्तर्हि कृत्स्नस्यापि वेदस्य प्रत्यक्षादेश्चाप्रामाण्यं स्यादित्यतिप्रसङ्गमाह एवमिति। तत्त्वमस्यादिवाक्यान्निश्चिततात्पर्यावगतौ सत्यामपि यदि कश्चिदिदमनृतमप्रामाण्यं ब्रूयात्तस्यात्मन्यन्यत्रापि कृत्स्नवेदेऽपि प्रत्यक्षादौ चावगतौ सत्यामप्यविशेषाद्विश्वासो न स्यात्ततश्च स्वतःप्रामाण्यं व्याहन्यत इत्यर्थः ॥ ११८ ॥

ननु न च वयमप्रामाण्यं वेदान्तानां ब्रूमः किन्त्वहं ब्रह्मास्मीत्युपासीतेत्युपासनाविधिपरत्वेन प्रामाण्यमिति तत्राह न चोपादित्सितादिति। अवगततत्त्वम्पदार्थस्य यदि वाक्याद्वाक्यार्थज्ञानं न जायेत तदा विधिपरत्वं कल्प्यम्। न चैतदस्ति विज्ञातपदार्थस्याधिकारिणो वाक्यात्प्रमित्यु-

न चेदनुभवोऽतः स्यात्पदार्थावगतावपि ।
कल्प्यं विध्यन्तरं तत्र नह्यन्योऽर्थोऽवगम्यते ॥११९॥

न च यथाभिमतोऽर्थो यथोक्तेन न्यायेन नावसीयते । कोऽसौ न्याय इत्याह ।

नामादिभ्यो निराकृत्य त्वमर्थं निष्परिग्रहः ।
निःस्पृहो युष्मदर्थेभ्यः शमादिविधिचोदितः ॥१२०॥
भंक्त्वा चान्नमयादींस्तान्पञ्चानात्मतयार्गलान् ।
अहंब्रह्मेति वाक्यार्थं वेत्ति चेन्नार्थ ईहया ॥ १२१ ॥

न चेदेवमुपगम्यते वाक्यस्य प्रमाणस्य सतोऽप्रामाण्यं प्राप्नोति । तदाह ।

---

त्पत्तेरुक्तन्यायेन मुख्यार्थसम्भवे विधेः कल्पयितुमशक्यत्वाच्च न विधिपरत्वेन प्रामाण्यं वाच्यमित्यर्थः । इतश्च न विधिपरत्वं कल्पनीयमित्याह तत्र न ह्यन्योऽर्थ इति । तत्त्वमस्यादिवाक्यप्रकरणे विधिपदाश्रवणादित्यर्थः ॥ ११९ ॥

कथं तर्हि पदार्थावगतिहेतुतया वाक्यार्थप्रतिपत्त्युपयोगी न्याय इति तं दर्शयितुं न्यायस्य तावत्पदार्थसाधकत्वमस्तीत्याह न चेति । प्रश्नपूर्वकं श्लोकद्वयमवतारयति कोऽसाविति । नामादिभ्यः प्राणान्तेभ्यश्छान्दोग्योपनिषत्प्रदर्शितेभ्य आत्मानं विविक्ततयाधिगम्याहंमानं वर्जयित्वा ममत्ववर्जनाच्च निष्परिग्रहः क्षेत्रपुत्रादिपरिग्रहरहितो युष्मदर्थेभ्यो निःस्पृहस्तदुपभोगतृष्णावर्जितः शमाद्यधिकारिविशेषणसंपन्नस्तैत्तिरीयकोपनिषत्प्रतिपादितान्नमयादिपञ्चकोशेष्वहंममाभिमानहीनः क्षपितसमस्तप्रतिबन्धतया ब्रह्मात्मतां प्रतिपद्यते चेत्किं तत्रोपासनादिव्यापारेण कृत्यमित्यर्थः ॥ १२० ॥ १२१ ॥

एवमुक्ताधिकारिणो वेदान्ताः प्रमितिमुत्पादयन्तीत्युक्तमिदानीं तद-

यदर्थं च प्रवृत्तं यद्वाक्यं तत्र न चेच्छ्रुतम् ।
प्रमामुत्पादयेत्तस्य प्रामाण्यं केन हेतुना ॥ १२२ ॥

अथ मन्यसे ।

जानीयाच्चेत्प्रसंख्यानाच्छब्दः सत्यवचाः कथम् ।
पारोक्ष्यं शब्दो नः प्राह प्रसंख्यानात्त्वसंशयम्॥१२३॥

न च युक्तिशब्दावृत्तिलक्षणात्प्रसंख्यानाद्यथावत्प्रतिपत्तिर्भविष्यतीति सम्भावयामः । यस्मात् ।

युक्तिशब्दौ पुराप्यस्य न चेदकुरुतां प्रमाम् ।
साक्षादावर्तनात्ताभ्यां किमपूर्वं फलिष्यति ॥ १२४ ॥

अथैवमपि प्रसंख्यानमन्तरेण प्राणान्धारयितुं न शक्नो-

---

नङ्गीकारे तेषामप्रामाण्यं प्रसज्येतेति दोषमाह न चेदेवमित्यादिना॥१२२॥

ननु भवतु प्रामाण्यं तथापि तत्प्रसंख्यानविधिपरत्वेनैवेति शङ्कां दर्शयतीत्याह अथ मन्यस इति । उत्तरमाह शब्द इति । अन्यपरस्य वाक्यस्य प्रत्यक्षादिविरोधादद्वितीये ब्रह्मणि प्रामाण्यं न स्यादित्यर्थः । पुनः पूर्ववाद्याह पारोक्ष्यमिति । शब्दः संसृष्टपरोक्षार्थविषयत्वान्नापरोक्ष्यहेतुः शब्दयुक्त्यभ्यासरूपं तत्प्रसंख्यानं निर्विचिकित्सं ब्रह्मात्मत्वं साक्षादनुभावयिष्यतीति भावः ॥ १२३ ॥

तदुत्तरत्वेन श्लोकमवतारयति न च युक्तीति । युक्तिशब्दौ यदि पूर्वमपरोक्षप्रमां न कुर्वाते परोक्षप्रमामेव कुरुतः पश्चात्कथमभ्यासात्तां कुर्वीयातां परोक्षतयानुमानाधिगतवह्न्यादावभ्यासादापरोक्ष्यादर्शनादित्यर्थः ॥ १२४ ॥

नन्वावृत्तिरसकृदुपदेशादिति सूत्रकारेण शब्दयुक्त्यभ्यासरूपप्रसंख्यानस्य स्वीकृतत्वान्न तदन्तरेण वाक्यं बोधकमिति शङ्कित्वास्य ब्रह्मात्मवस्तुनो ज्ञानसाधनश्रवणमननादावेवावृत्तिः सूत्रकृताभ्युपगता तत्रा-

षीति चेच्छ्रवणादावेव सम्पादयिष्यामः । कथम् ।

प्रसंख्याने श्रुतावस्य न्यायोऽस्त्वाम्रेडनात्मकः ।
ईषच्छ्रुतं सामिश्रुतं सम्यक्श्रुत्वावगच्छति ॥ १२५ ॥

ननु प्रसंख्यानविधिमनभ्युपगच्छतः पारमहंसी चर्या बौद्धादिचर्यावदशास्त्रपूर्विका प्राप्नोति ततश्चारूढपतितत्वं न स्यादशेषकर्मणां च निवृत्तिर्न प्राप्नोतीति । उच्यते ।

---

पाततोऽधिगतशब्दयुक्तीनामावृत्तिव्यतिरेकेण सम्यक्स्वरूपावधारणाभावादावृत्तेरुपयोगो न तु श्रवणादिसाध्यविज्ञान इति परिहरति अथैवमित्यादिना ॥ १२५ ॥

ननु मुमुक्षोर्नित्यनैमित्तिकविधिप्रापितकर्मप्रवृत्तीनामनभ्युपगमात्प्रसंख्यानविध्यनभ्युपगमाच्च वैधस्य प्रवृत्त्यन्तरस्याप्यभावात्तदर्थतया नित्यनैमित्तिककर्मपरित्यागस्य वक्तुमशक्यत्वात्पाषण्डचर्यावन्निर्मूलैव परमहंसचर्या स्यादिति शङ्कते नन्विति । उत्पन्नविवेकेनानुष्ठितस्याचारस्याशास्त्रीयत्वे को दोष इत्याशङ्क्याह ततश्चेति । सकलश्रुतिस्मृतिपुराणेषु प्रसिद्धमारूढपतितत्वं न सिध्यतीत्यर्थः । आरूढपतितत्वं च स्यादिति पाठे विधिपरिप्रापितसकलकर्मपरित्यागादारूढपतितत्वं स्यादित्यर्थः । किंच प्रसंख्यानविध्यनभ्युपगमे नित्यनैमित्तिककर्मनिवृत्तिर्न सिध्यतीत्याह अशेषेति । प्रसंख्यानविध्यभ्युपगमोऽनवरतमनन्यचित्ततया ज्ञानाभ्यासात्तद्विरुद्धनित्यनैमित्तिककर्मणां निवृत्तिर्भवति तदनभ्युपगमे तु यावज्जीवमग्निहोत्रमित्यादिश्रुतिचोदितकर्मणोऽनुष्ठेयत्वात्सर्वकर्मसंन्यासस्यावसर एव नास्तीत्यर्थः । एतदुत्तरत्वेन श्लोकमवतारयति उच्यत इति । त्वम्पदार्थविवेकाय श्रवणादिविधेरभ्युपगमात्तदङ्गत्वेन च सर्वकर्मसंन्यासस्य श्रुतिस्मृत्योर्विहितत्वान्नोक्ताशास्त्रीयत्वा-

त्वमर्थस्यावबोधाय विधिरप्याश्रितो यतः ।
तमन्तरेण ये दोषास्तेऽपि नायान्त्यहेतवः ॥ १२६ ॥

इति सुरेश्वराचार्यकृतनैष्कर्म्यसिद्धिसम्बन्धोक्तौ
तृतीयोऽध्यायः ॥ ३ ॥

---

दिदोषप्रसक्तिरित्यर्थः ॥ १२६ ॥

इति श्रीज्ञानोत्तममिश्रविरचितायां नैष्कर्म्यसि-
द्धिचन्द्रिकायां तृतीयोऽध्यायः ॥ ३ ॥

# चतुर्थोऽध्यायः ।

पूर्वाध्यायेषु यद्वस्तु विस्तरेणोदितं स्फुटम् ।
संक्षेपतोऽधुना वक्ष्ये तदेव सुखवित्तये ॥ १ ॥
संक्षेपविस्तराभ्यां हि मन्दोत्तमधिया नृणाम् ।
वस्तूच्यमानमेत्यन्तःकरणं तेन भण्यते ॥ २ ॥
आत्मानात्मा च लोकेऽस्मिन्प्रत्यक्षादिप्रमाणतः ।
सिद्धस्तयोरनात्मा तु सर्वत्रैवात्मपूर्वकः ॥ ३ ॥
अनात्मत्वं स्वतःसिद्धं देहाद्भिन्नस्य वस्तुनः ।
ज्ञातुरप्यात्मता तद्वन्मध्ये संशयदर्शनम् ॥ ४ ॥

---

श्रीगणपतिसरस्वतिसद्गुरुभ्यो नमः । हरिः । ॐ । एवं प्रथमद्वितीयतृतीयाध्यायैः क्रमेण समन्वयाविरोधवाक्यार्थज्ञानसाधनानि विचार्य चतुर्थाध्यायेन फलविचारं प्राधान्येनारभमाण एष संक्षेपतः पूर्वाध्यायत्रयस्यार्थ उक्त इत्यतः प्राक्तनस्य ग्रन्थस्यातीताध्यायत्रयेण पौनरुक्त्यं परिहरति पूर्वाध्यायेष्विति ॥ १ ॥

ननु विस्तरेणोक्तमपि न प्रतिपद्यन्ते चेत्कथं संक्षिप्योक्तं सुखं प्रतिपद्येरन्नित्यत आह संक्षेपविस्तरेति ॥ २ ॥

संदिग्धे न्यायः प्रवर्त्तत इति न्यायात्संदिग्धस्यैव विचार्यत्वात्तत्परिशोधयितुमविप्रतिपन्नमर्थं तावद्दर्शयति आत्मेति । ननु प्रत्यक्षादिप्रमाणैरनात्मैव सिद्धो न पुनरात्मेत्याशङ्क्य द्रष्टृसिद्धिव्यतिरेकेण दृश्यस्यासिद्धेर्मैवमित्याह तयोरिति ॥ ३ ॥

किंलक्षणौ तर्ह्यात्मानात्मानौ प्रसिद्धावित्यत्राह अनात्मत्वमिति । दृश्या घटादयोऽनात्मानो द्रष्टैवात्मेति प्रसिद्धमित्यर्थः । कुत्र तर्हि संशय इत्याह मध्य इति । घटादेः प्रत्यगात्मनश्चान्तराले शरीरेन्द्रियादौ कतमो द्रष्टेति वादिविप्रतिपत्तेः संशय इत्यर्थः ॥ ४ ॥

असाधारणांस्तयोर्धर्मान् ज्ञात्वा धूमाग्निवद्बुधः ।
अनात्मनोऽथ बुद्ध्यन्तान् जानीयादनुमानतः ॥ ५ ॥
इदमित्येव बाह्येऽर्थे ह्यहमित्येव बोद्धरि ।
द्वयं दृष्टं यतो देहे तेनायं मुह्यते जनः ॥ ६ ॥

केन पुनर्न्यायेनात्मानात्मनोरश्वमहिषयोरिव विभागः क्रियत इति । उच्यते ।

न्यायः पुरोदितोऽस्माभिरात्मानात्मविभागकृत् ।
तेनेदमर्थमुत्सार्य ह्यहमित्यत्र यो भवेत् ॥ ७ ॥
विद्यात्तत्त्वमसीत्यस्माद्भावाभावदृशं सदा ।
अनन्तरमबाह्यार्थं प्रत्यक्स्थं मुनिरञ्जसा ॥ ८ ॥

---

कथं तर्हि निर्णय इत्याह असाधारणानिति । द्रष्टृत्वाजडत्वादयो ह्यात्मनोऽसाधारणधर्मा दृश्यत्वजडत्वादयस्त्वनात्मधर्मास्ताञ्ज्ञात्वा धूमेनाग्निमिव देहादीन्बुध्यन्तान्दृश्यत्वादिलिङ्गकानुमानैरनात्मनो जानीयादित्यर्थः ॥ ५ ॥

मध्ये संशयदर्शनमित्युक्तं किं तत्र संशयकारणमित्यत्राह इदमिति । इदमित्येव घटादिबाह्यविषये बुद्धिर्भवति । अहमित्येव ज्ञातरि बुद्धिः शरीरे तु ममेदं शरीरमहं मनुष्य इति च बुद्धिद्वयमुपलभ्यते तेन संशयो जायत इत्यर्थः ॥ ६ ॥

किंपुनस्तन्निर्णयकारणमित्याकाङ्क्षायां द्रष्टृदृश्यादिचतुर्विधान्वयव्यतिरेकलक्षणो न्यायः पूर्वाध्यायेषूपपादित इत्याह केन पुनरित्यादिना । तेनेदमिति । इदमनिदंरूपसंभिन्नेऽहङ्कारे य इदमंशस्तं दृश्यत्वादिहेतुभिरनात्मतयोत्सार्य यः परिशिष्टोऽनिदमंशस्तमात्मानमुक्तलक्षणं तत्त्वमसीतिवाक्याज्जानीयादित्यर्थः ॥ ७ ॥

विद्यादिति ॥ ८ ॥

उच्यतां तर्हि कया तु परिपाट्या वाक्यार्थं वेत्तीति। उच्यते। अन्वयव्यतिरेकाभ्याम्।

त्यक्तकृत्स्नेदमर्थत्वात्त्यक्तोऽहमिति मन्यते।
नावगच्छाम्यहं यस्मान्निजात्मानमनात्मनः॥ ९॥

अथ शरीरादिबुद्धिपर्यन्तः स सर्वोऽनात्मैवेति प्रमाणाद्विनिश्चित्य किमिति बुभुत्सातो नोपरमते। शृणु।

अनुच्छिन्नबुभुत्सश्च प्रत्यग्धेतोरनात्मनः।
दोलायमानचित्तोऽयं मुह्यते भीतवन्नरः॥ १०॥

अविलुप्तविज्ञानात्मन आत्मत्वादेव नित्यसान्निध्याद्बुभुत्सुः किमिति न प्रतिपद्यत इति। यस्मात्।

---

कस्तर्हि वाक्यार्थप्रतिपत्तौ क्रम इत्याकाङ्क्षायां प्रथममन्वयव्यतिरेकाभ्यां बुद्ध्यादीननात्मत्वेनोत्सार्य ततो विविक्तं प्रत्यगात्मानं तत्साक्षिणमधिगम्य वाक्याद्ब्रह्मात्मतां प्रतिपद्यत इति क्रममभिप्रेत्याह उच्यतामित्यादिना। वाक्यापेक्षायां कारणं दर्शयितुमाह त्यक्तकृत्स्नेति। पूर्वं देहादेर्बुद्ध्यन्तस्याहमित्यात्मत्वेन गृहीतस्यान्वयव्यतिरेकाभ्यामनात्मतया परित्यक्तत्वादहमात्मापि परित्यक्त इति मुमुक्षुर्मन्यते कुतो यतोऽनात्मनः सकाशान्निष्कृष्य निजमात्मानं नाहमवगच्छामि तस्मादहं नष्टोऽस्मीति मन्यते ततस्तन्निर्धारणाय बुभुत्सोर्वाक्यापेक्षेत्यर्थः॥ ९॥

उक्तमेवार्थं प्रश्नपूर्वकं विशदयति अथेत्यादिना। अनुच्छिन्ना बुभुत्सा बोद्धुमिच्छा यस्य स तथोक्तः। तत्र हेतुः प्रत्यग्धेतोरिति। अनात्मनः सकाशात्प्रत्यगात्मनः प्रतिपत्तिहेतोः प्रतिपत्त्यर्थमिति यावत्। भीतो भूतोपनिगृहीतो भ्रान्तस्तद्वदित्यर्थः॥ १०॥

नन्वात्मनः स्वसत्ताप्रयुक्तप्रकाशकत्वाद्देशादिव्यवधानाभावाच्च नाप्रकाशो युक्तस्तत्कथं बुभुत्सानुपरम इति शङ्कते अविलुप्तेति। तदुत्तरत्वेन श्लोकमवतारयति यस्मादिति। यैश्चक्षुरादिभिः करणैर्विवेकोदया-

येरद्राक्षीत्पुरात्मानं यमनात्मेति वीक्षते ।
दृष्टेर्द्रष्टारमात्मानं तै प्रसिद्धैः प्रमित्सति ॥ ११ ॥

कस्मात्पुनर्हेतोः पराचीनाभिः शब्दाद्यवलेहिनीभिर्बुद्धिभिरात्मानमनात्मवन्न वीक्षत इति । उच्यते ।

चक्षुर्न वीक्षते शब्दमतदात्मत्वकारणात् ।
यथैवं भौतिकी दृष्टिर्नात्मानं परिपश्यति ॥ १२ ॥

प्रत्यक्षादिप्रमाणस्वाभाव्यानुरोधेन तावत्तददर्शनकारणमुक्तम् । अथ प्रमेयस्वाभाव्यानुरोधेन प्रतिषेध उच्यते ।

धीविक्रियासहस्राणां हानोपादानधर्मिणाम् ।
सदा साक्षिणमात्मानं प्रत्यक्त्वान्नाहमीक्षते ॥ १३ ॥

क्व पुनरियं विवेकबुद्धिः किमात्मन्युतानात्मनीति । किञ्चातो यद्यात्मनि कूटस्थत्वव्याघातोऽनात्मदर्शित्वात् । अथानात्मनि तस्या अप्यचैतन्यान्न विवेकसम्बन्ध इति । उच्यते । दाह्यदाहकतैकत्रेत्युक्तपरिहारात् ।

---

त्पूर्वं देहादिलक्षणमात्मानमद्राक्षीद्यमिदानीं विवेकोदये सत्यनात्मेति मन्यते तमद्राक्षीदित्यन्वयः । तैः प्रसिद्धैः करणैः प्रमातुरपि साक्षिणं प्रमातुमिच्छति यस्मात्तस्मान्न प्रतिपद्यत इति सम्बन्धः ॥ ११ ॥

इन्द्रियाणामनात्मविषयत्वे कारणं प्रश्नपूर्वकं दर्शयति कस्मादित्यादिना । यथा चक्षुः शब्दं न पश्यत्यतदात्मत्वकारणादशब्दगुणद्रव्यप्रकृतिकत्वादेवं भौतिकान्तःकरणजनितं विज्ञानमन्तःकरणाप्रकृतिकमात्मानं न पश्यतीत्यर्थः ॥ १२ ॥

नाहमीक्षत इति । आत्मनः समस्तबुद्धिवृत्तिभावाभावसाक्षितयाविषयत्वेन प्रत्यक्त्वादहमन्तःकरणं विषयिणं न पश्यतीत्यर्थः ॥ १३ ॥

एवं द्रष्टृदृश्यादिविवेकेनात्मानात्मविवेको दर्शितः । सेयं विवेकबुद्धिः किमाश्रयेत्याक्षिप्य समाधत्ते क्व पुनरित्यादिना । अनात्मदर्शित्वादना-

बुद्धावेव विवेकोऽयं यदनात्मतया भिदा ।
बुद्धिमेवापमृद्नाति कदलीं तत्फलं यथा ॥ १४ ॥

सोऽयमतत्त्वे तत्त्वदृक् ।

अनुमानप्रदीपेन हित्वा सर्वाननात्मनः ।
संसारैकावलम्बिन्या तदभावं धियेप्सति ॥ १५ ॥

योऽयमन्वयव्यतिरेकजो विवेक आत्मानात्मविभागल-

---

त्माकारज्ञानपरिणामाश्रयत्वाङ्गीकारादित्यर्थः । दाह्यदाहकतैकत्रेति । दाह्यदाहकतैकत्र यथा स्याद्वह्निदारुणोरित्यत्राहङ्कारात्मनोराध्यासिकतादात्म्यादहङ्कारस्याचेतनस्यापि ज्ञातृत्वमुपपादितं तेनाहङ्कारपरिणामलक्षणं विवेकज्ञानमात्मन्यध्यारोप्यते तस्मान्नात्मनः कूटस्थत्वव्याघातो नापि केवलाचेतनस्य ज्ञानाश्रयत्वमित्यर्थः । विशिष्टाश्रयोऽपि विवेकज्ञानपरिणामो बुद्ध्युपादानकत्वाद्बुद्धिगत एवात्मन्यध्यारोप्यते परमित्याह बुद्धाविति । यदनात्मतया यस्या अनात्मतयात्मनः सकाशाद्भेदोऽवगम्यते तस्यामेव बुद्धौ विवेक इत्यर्थः । कथं तर्हि तत्परिणामस्य तन्निवर्त्तकत्वमित्यत आह बुद्धिमेवेति ॥ १४ ॥

एवं तर्हि यथोक्तविवेकेनैव बुद्ध्यादिद्वैतप्रपञ्चस्य निवर्त्तितत्वात्किं वाक्येनेत्यत आह सोऽयमित्यादिना । आत्मानात्मनोर्यौ भेदेतरेतराभावौ तावप्यद्वैतविपरीतरूपत्वादतत्त्वमतस्तथाभूता विवेकधीरपि भ्रान्तिरेव द्वैतलक्षणसंसारैकावलम्बनत्वात्तेन वाक्यार्थज्ञानं विना तयैव भेदेतरेतराभावावलम्बनया न संसारनिवृत्तिरिति भावः ॥ १५ ॥

ननु वाक्येनाप्यनात्माकारपरिहारेणात्मनोऽसाधारणाकारसमर्पणमेव क्रियते नाधिकमेवमन्वयव्यतिरेकाभ्यामप्यनात्मपरिहारेणात्मासाधारणस्वरूपपरिग्रहणात्तत एव मुक्तिः किं न स्यात्किं वाक्येनेत्याशङ्क्याह योऽयमिति । यद्यपि देहाद्यनात्माकारपरिहारेणान्वयव्यतिरेकाभ्यामात्मा समर्प्यते तथाप्यनात्मभ्यो भेदेन समर्पणाद्भेदस्याखण्डैकरसप्रत्यगा-

क्षणोऽनात्मस्थः स्थाणौ संशयावबोधवत्प्रतिपत्तव्योऽयथावस्तुस्वाभाव्यान्मृगतृष्णिकोदकप्रबोधवदित्यत आह ।

संसारबीजसंस्थोऽयं तद्धिया मुक्तिमिच्छति ।
शशो निमीलनेनेव मृत्युं परिजिहीर्षति ॥ १६ ॥

अस्यार्थस्य द्रढिम्ने श्रुत्युदाहरणम् ।

इममर्थं पुरस्कृत्य श्रुत्या सम्यगुदाहृतम् ।
"यच्चक्षुषे"ति विस्रब्धं "न दृष्टेरि"ति च स्फुटम् ॥१७॥

बुद्ध्यन्तमपविद्ध्यैवं कोन्वहं स्यामितीक्षितुः ।
श्रुतिस्तत्त्वमसीत्याह सर्वमानातिगामिनी ॥ १८ ॥

---

त्मस्वभावत्वाभावात्तद्धिषयं ज्ञानं संशयविपर्यासज्ञानवदात्मासाधारणस्वभावावलम्बनं न भवति तेन वाक्यजमद्वैतज्ञानमेव मुक्तिहेतुर्न विवेकज्ञानमित्यर्थः । संसारबीजेति । संसारबीजमज्ञानं तत्संस्थ एव विवेकदर्शी भेदज्ञानस्याज्ञानजन्यत्वादेवंविधस्तद्धिया संसारगोचरयाविवेकदृष्ट्या मुक्तिमिच्छति सोऽयं नयननिमीलनेन मृत्युं परिजिहीर्षति यः शशः स इव भवति । अतद्धेतुमेव तद्धेतुं मन्यत इत्यर्थः ॥ १६ ॥

एवं द्वैतग्राहकप्रत्यक्षादिप्रमाणानामविषयत्वमात्मनस्तर्केणोपपाद्य तस्य प्रशिथिलमूलत्वपरिहाराय प्रमाणमुदाहर्तुमाह अस्येति । "यच्चक्षुषा न पश्यति" "न दृष्टेर्द्रष्टारं पश्येरि"त्यादिश्रुत्या सर्वप्रमाणानामविषयत्वमात्मनो दर्शितमित्यर्थः ॥ १७ ॥

यदि प्रत्यक्षाद्यगम्यं केन तर्हि प्रमाणेनावसीयत इत्यत आह बुद्ध्यन्तमिति । एवं पूर्वोक्तान्वयव्यतिरेकाभ्यामनात्मनो निराकृत्य कोऽहमित्यात्मस्वरूपविशेषं बुभुत्सोः श्रुतिः सर्वमानान्यतीत्य तदगोचरं वस्त्वधिगन्तुं शीलमस्या अस्तीति सर्वमानातिगामिनी तद्ब्रह्म त्वमसीति विशेषस्वरूपमवगमयतीत्यर्थः ॥ १८ ॥

एष संक्षेपतः पूर्वाध्यायत्रयस्यार्थ उक्तः । सोऽयं न्याय्यो ऽपि वेदान्तार्थः शास्त्राचार्यप्रसादलभ्योऽप्यनपेक्षितशास्त्राचार्यप्रसादोऽनन्यापेक्षसिद्धस्वभावत्वात्कैश्चिच्छ्रद्दधानैर्न प्रतीयते । तेषां सङ्ग्रहार्थमभिमतप्रामाण्योदाहरणम् ।

भगवत्पूज्यपादैश्च उदाहार्यैवमेव तु ।
सुविस्पष्टोऽस्मदुक्तोऽर्थः सर्वभूतहितैषिभिः ॥ १९ ॥

किं परमात्मन उपदेश उतापरमात्मन इति । किञ्चातो यदि परमात्मनस्तस्योपदेशमन्तरेणैव मुक्तत्वान्निरर्थकमुपदेशः । अथापरमात्मनस्तस्यापि स्वत एव संसार-

---

वृत्तकीर्त्तनपूर्वकं वर्त्तिष्यमाणग्रन्थस्य तात्पर्यमाह एष इत्यादिना एवं वेदान्तार्थो न्यायोपेतोऽपि शास्त्राचार्यप्रसादलभ्योऽप्यनपेक्षितशास्त्राचार्यप्रसादः स्वगुर्वनुग्रहप्राप्तवेदान्तार्थसंप्रदायो न भवत्यनन्यापेक्षसिद्धस्वभावत्वात्केवलं स्वमनीषिकामात्रपरिकल्पितत्वादिति गुरुसंप्रदायावगतवेदान्तार्थश्रद्धालुभिः कैश्चिन्न प्रतीयते न संगृह्यते तस्तेषां बुद्धिसङ्ग्रहायाभिमतप्रामाण्याचार्यस्य वाक्यं मयोदाह्रियत इत्यर्थः । यद्वा । वेदान्तार्थोऽविद्यादशायां शास्त्राद्यधीनोऽपि विद्योत्तरकालं स्वानुभवसिद्धत्वादनपेक्षितशास्त्राचार्यप्रसाद एव तथापि गुरुसंप्रदायावगतवेदान्तार्थश्रद्धालुभिर्गुरुसंप्रदायदर्शनं विना न निश्चीयते ततस्तेषां सङ्ग्रहायोदाहरणमित्यर्थः । अथवा । वेदान्तार्थो न्याय्योऽप्यनन्यापेक्षसिद्धस्वभावत्वादनपेक्षितशास्त्राचार्यप्रसादोऽपि शास्त्राचार्यप्रसादलभ्य एवेति श्रद्दधानैः कैश्चिद्गुरुसंप्रदायदर्शनं विना न निश्चीयतेऽतस्तेषां सङ्ग्रहाय तत्प्रदर्शनं क्रियत इत्यर्थः ॥ १९ ॥

इदानीमुपदेशसाहस्र्यां भगवत्पादाचार्यैः पूर्वपक्षत्वेनोक्तमर्थमुदाहरति किं परमात्मन इति । एतदुत्तरत्वेन भाष्यकारीयमेव वचनं दर्शि-

स्वभावत्वान्निष्फल उपदेशः । एवमुभयत्रापि दोषवत्त्वा-
दत आह ।

"अविविच्योभयं वक्ति श्रुतिश्चेत्स्याद्ग्रहस्तथा" ।
इति पक्षमुपादाय पूर्वपक्षं निशात्य च ॥ २० ॥

तच्चेदमविवेकात्स्वतो विविक्तात्मने तत्त्वमसीत्युपदिष्टम् ।
युष्मदस्मद्विभागज्ञे स्यादर्थवदिदं वचः ।
यतोऽनभिज्ञे वाक्यं स्याद्बधिरेष्विव गायनम् ॥ २१ ॥

---

यति अविविच्येति । उभयमिदमनिर्दंरूपमात्मानात्मलक्षणं वस्त्वविवि-
च्याध्यस्यान्तःकरणकञ्चुकं परिधायाहमिति व्यवस्थितं प्रत्यगात्मानमु-
द्दिश्य यदि तत्त्वमसीत्युपदिशेच्छास्त्रं तथा सत्युपदेशः सम्भवतीति
स्वीकारः स्यात्केवलानात्मनः केवलपरमात्मनश्चोपदेशासम्भवस्य द-
र्शितत्वात्तौ पक्षौ पूर्वपक्षत्वेन निराकृत्येमं च पक्षं सिद्धान्तत्वेन स्वी-
कृत्य भगवत्पूज्यपादैरुदाहारीति सम्बन्धः । तदित्थं क्व पुनरियं विवेकबु-
द्धिरिति पूर्वपक्षीकृत्य दाह्यदाहकतैकत्रेति न्यायेन बुद्धावेव विवेकोऽय-
मिति यदस्माभिरुक्तं तदेतद्भाष्यकारैरपि निदर्शितमिति भावः ॥ २० ॥

एवं "ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदि"त्यादिवाक्यतात्प-
र्यालोचनया परमात्मन एवान्तःकरणकञ्चुकस्य तदविविक्तस्योपदेश इति
दर्शितम् । तर्ह्यात्मानात्मविवेकान्वयव्यतिरेकौ व्यर्थावित्याशङ्क्याह तच्चे-
दमिति । स्वतो वाक्यप्रवृत्तेः प्रागेवान्वयव्यतिरेकाभ्यां कार्यकारणस-
ङ्घाताद्विविक्तो विवेचित आत्मा यस्य तस्मै तदिदं ब्रह्मात्मत्वं तत्त्वमसी-
त्युपदिष्टं तस्मादन्वयव्यतिरेकयोर्न वैयर्थ्यमित्यर्थः । तर्ह्यन्वयव्यतिरे-
काभ्यामेव विमुक्तत्वात्किमर्थमुपदेश इत्यत आह अविवेकादिति । अ-
विवेकस्यानवबोधस्याज्ञानस्य स्थितत्वात्तन्निराकरणायोपदेश इत्यर्थः ।
विपक्षे दोषमाह यतोऽनभिज्ञ इति । पदार्थानभिज्ञस्य वाक्यं वाक्यार्थ-
बोधकं न स्यादित्यर्थः ॥ २१ ॥

तस्य च युष्मदस्मद्विभागविज्ञानस्य का युक्तिरुपायभावं प्रतिपद्यते । शृणु ।

"अन्वयव्यतिरेकौ हि पदार्थस्य पदस्य च ।
स्यादेतदहमित्यत्र युक्तिरेवावधारणे" ॥ २२ ॥

कथं तौ युक्तिरित्यत्राह ।

"नाद्राक्षमहमित्यस्मिन् सुषुप्तेऽन्यन्मनागपि ।
न वारयति दृष्टिं स्वां प्रत्ययं तु निषेधति" ॥ २३ ॥

"एवं विज्ञातवाच्यार्थे श्रुतिलोकप्रसिद्धितः ।
श्रुतिस्तत्त्वमसीत्याह श्रोतुर्मोहापनुत्तये" ॥ २४ ॥

---

अन्वयव्यतिरेकौ पदपदार्थविवेककारणमिति यदस्माभिरुक्तं तदपि भगवत्पादाचार्यैः प्रदर्शितमित्याह तस्य चेति । पदपदार्थयोरन्वयव्यतिरेकावेवैतदिदमनात्मरूपमहमात्मेत्यस्मिन्नवधारणे युक्तिरुपायः स्यादित्यर्थः । यद्वैतदहङ्काररूपमेतत्साक्षिरूपमित्येतस्मिन्नवधारणे युक्तिः स्यादित्यर्थः ॥ २२ ॥

आगमापायितदवध्यन्वयव्यतिरेकावपि पदार्थविवेकोपायत्वेनास्मदुक्तावाचार्यैरपि दर्शिताविति दर्शयति कथमिति । अहमिदानीमस्मिन्सुषुप्ते नात्मनोऽन्यदीषदद्राक्षमिति सुषुप्तादुत्थितः परामृशन्स्वात्मभूतां दृष्टिं न निवारयति परामर्शापेक्षितपूर्वानुभवरूपत्वेन तत्र स्थितत्वात्किन्तु घटपटादिविषयप्रत्ययमेव निषेधति तेनात्मैवाव्यभिचारी अनात्मा तु व्यभिचारीत्युक्तलक्षणान्वयव्यतिरेकौ दर्शिताविल्यर्थः । अत्रेति पाठ आत्मन्यस्मिन्काले वेत्यर्थः ॥ २३ ॥

इत्थं कृतान्वयव्यतिरेकस्य वाक्यमेवैकत्वप्रतिपादकं नान्यदिति यदुक्तं तदाचार्यैरप्युक्तमित्याह एवमिति । "न हि द्रष्टुरि"त्यादिश्रुतिलोकप्रसिद्धिद्वारेण विज्ञातवाच्यार्थे विविक्तज्ञातवाच्यार्थेऽनात्मनिरासेनावगतवाच्यार्थ इत्यर्थः । विज्ञातवाक्यार्थ इति पाठे विज्ञातपदार्थ इत्यर्थः । पदार्थस्यैव वाक्यार्थत्वात् ॥ २४ ॥

तत्र त्वमिति पदं यत्र लक्षणया वर्त्तते सोऽर्थ उच्यते ।

"अहंशब्दस्य या निष्ठा ज्योतिषि प्रत्यगात्मनि ।
सैवोक्ता सदसीत्येवं फलं तत्र विमुक्तता" ॥ २५ ॥

अन्यच्चान्वयव्यतिरेकोदाहरणम् । यथा ।

"छित्त्वा त्यक्तेन हस्तेन स्वयं नात्मा विशेष्यते ।
तथा शिष्टेन सर्वेण येन येन विशेष्यते" ॥ २६ ॥

"विशेषणमिदं सर्वं साध्वलङ्करणं यथा ।
अविद्याध्यस्तमतः सर्वं ज्ञात आत्मन्यसद्भवेत्"॥२७॥

---

त्वम्पदलक्षणमपि यथोक्तमाचार्यैरपि दर्शितमित्याह तत्रेति । अहंशाब्दस्यात्मवाचकस्य प्रत्यगात्मज्योतिषि लक्षणया या निष्ठा पर्यवसानं सैवोक्ता सदसीत्यपि वाक्ये विवक्षिता त्वम्पदार्थोत्त्वत्पदलक्ष्यस्य न भेदोऽस्तीत्यर्थः । फलवत्त्वादप्येकत्व एव श्रुतेस्तात्पर्यमाह फलं तत्रेति । अथवाऽहं ब्रह्मास्मीत्यत्राहंशब्दस्य लक्ष्यं वस्तु तदेव तत्त्वमसीत्यत्र त्वम्पदलक्ष्यमित्याह अहंशब्दस्येति । एवमहंशब्दलक्ष्ये वस्तुनि त्वम्पदलक्ष्ये सति किं फलमित्यपेक्षायामाह फलं तत्रेति ॥ २५ ॥

आत्मानात्मविवेकायान्वयव्यतिरेकौ प्रकारान्तरेणापि दर्शितावाचार्यैरित्युत्तरश्लोकपञ्चकस्य तात्पर्यमाह अन्यच्चेति । छित्त्वा त्यक्तेनेति । यथा छित्त्वा त्यक्तेन हस्तेन स्वयमात्मा शोभनहस्तो विरूपहस्त इति वा पूर्वं तेन विशेष्यमाणोऽपि न विशेष्यते तथा विशिष्टेन सर्वेण येन येन स्थूलदेहसमवायिना श्रोत्रादिना सूक्ष्मदेहसमवायिना च दुःखित्वादिना पूर्वं विशेष्यते तेन तेनापि न विशेष्यत इत्यर्थः ॥ २६ ॥

ननु किमिति न तेन विशेष्यत इत्याशङ्क्य विशेषणानामविद्याध्यस्तत्वेनासत्वादित्याह विशेषणमिदमिति । यथा सुवर्णादिलक्षणमलङ्करणं देहादिव्यतिरिक्तस्य देहाद्यध्यासवशादध्यस्तं तथैव तदपि सर्वं विशेषणमात्मनि यतोऽविद्याध्यस्तमतः शास्त्राचार्यप्रसादादहंब्रह्मास्मीति विज्ञात आत्मन्यसद्भवेदित्यर्थः ॥ २७ ॥

"तस्मात्त्यक्तेन हस्तेन तुल्यं सर्वं विशेषणम् ।
अनात्मत्वेन तस्माज्ज्ञो मुक्तः सर्वविशेषणैः" ॥२८॥

"ज्ञातैवात्मा सदा ग्राह्यो ज्ञेयमुत्सृज्य केवलः ।
अहमित्यपि यद्ग्राह्यं व्यपेताङ्गसमं हि तत्" ॥ २९ ॥

"दृश्यत्वादहमित्येष नात्मधर्मो घटादिवत् ।
तथान्ये प्रत्यया ज्ञेया दोषाश्चात्मामलो ह्यतः" ॥३०॥

सर्वन्यायोपसङ्ग्रहः ।

---

यस्मादविद्याध्यस्तं तस्मात्त्यक्तहस्तवदनात्मैव सर्वं विशेषणं तस्मादात्मा निरस्तसमस्तविशेषण इत्याह तस्मात्त्यक्तेनेति ॥ २८ ॥

ननु विशेषणानां व्यभिचारित्वादनात्मत्वं चेत्कस्तर्ह्यात्मेत्याशङ्क्य व्यभिचारिसर्वविशेषणसाक्षित्वेन यः सर्वदान्वितः स सर्वसाक्षी सर्वविशेषणपरित्यागेनात्मेति ग्राह्य इत्याह ज्ञातैवेति । केवलो निरवयवः । नन्वात्मनः सर्वविशेषणवर्जितत्वमनुपपन्नमहमिति विशेषणपुरस्कारेणैव सर्वैर्ग्रहणादित्यत आह अहमित्यपीति । अहमित्यपि सर्वैर्यद्ग्राह्यमहंरूपं व्यपेताङ्गसमं त्यक्तहस्तादिसमं सुषुप्त्यादौ व्यभिचारात्समस्तविशेषणवर्जित आत्मेत्यर्थः ॥ २९ ॥

एवं व्यभिचारित्वेनाहङ्कारादीनां छिन्नहस्तवदनात्मत्वमतद्विशेषणत्वं चाभिधाय दृश्यत्वादप्यनात्मत्वमनात्मधर्मत्वं च तेषामाचार्यैर्नान्यदन्यत्प्रकरणे दर्शितमित्याह दृश्यत्वादिति । अहमित्येष परिणामवानहङ्कारो नात्मधर्मो दृश्यत्वाद्घटादिवदिति तस्य येऽन्ये परिणामप्रत्ययाः सुखदुःखादयो दोषा रागादयश्चेति तथा ज्ञेया दृश्यत्वान्नात्मधर्मा इति ज्ञेया इत्यर्थः ॥ ३० ॥

पुनरपि भगवत्पूज्यपादाचार्यैरसदुक्तो न्यायस्तत्त्वमसिप्रकरणेऽपि दर्शितः समस्तन्यायोपसंहारैः पञ्चभिः श्लोकैः प्रदर्शित इत्याह सर्व-

"नित्यमुक्तत्वविज्ञानं वाक्याद्भवति नान्यतः ।
वाक्यार्थस्यापि विज्ञानं पदार्थस्मृतिपूर्वकम्" ॥३१॥
"अन्वयव्यतिरेकाभ्यां पदार्थः स्मर्यते ध्रुवम् ।
एवं निर्दुःखमात्मानमक्रियं प्रतिपद्यते" ॥ ३२ ॥
"सदेवेत्यादिवाक्येभ्यः प्रमा स्फुटतरा भवेत् ।
दशमस्त्वमसीत्यस्माद्यथैवं प्रत्यगात्मनि" ॥ ३३ ॥
वीक्षापन्नस्योदाहरणम् ।

---

न्यायेति । नित्यमुक्तत्वेति । अहं ब्रह्मास्मीत्यपरोक्षानुभवो वाक्यात्तत्त्वमस्यादिलक्षणाद्भवति नान्यतः प्रसंख्यानाद्यनुष्ठानादिभ्यो वाक्यार्थस्य प्रमितेः पुष्कलकारणमाह वाक्यार्थस्येति । अखण्डाद्वयापरोक्षवाक्यार्थज्ञानं ब्रह्मात्मरूपं तत्त्वंपदार्थस्मरणपूर्वकं भवितुमर्हति ॥ ३१ ॥

तत्त्वंपदार्थस्मरणं च पूर्वोक्तान्वयव्यतिरेकाभ्यां वृद्धव्यवहारानुसारेण भवतीत्यर्थः । एवमुक्तप्रकारेण सर्वविशेषणरहितमात्मानं वाक्यादहंब्रह्मास्मीति प्रतिपद्यत इत्याह एवमिति ॥ ३२ ॥

कथं पुनर्वाक्यात्प्रतिपद्यत इत्यत आह सदेवेति । "सदेव सोम्येदमग्र आसीत्" । "सत्यं ज्ञानमनन्तं ब्रह्मे"त्यादिवाक्येभ्योऽवगतं ब्रह्म यदा तत्त्वमसीत्याचार्यो बोधयेत्तदा विविक्तपदार्थस्याहंब्रह्मास्मीतिप्रमितिर्जायत इत्यर्थः । अत्र दृष्टान्तमाह दशमस्त्वमसीतीति । यथा दशमोऽसीतिवाक्याद्भ्रान्तस्याहं दशमोऽस्मीति स्फुटा प्रमितिर्भवत्येवं तत्त्वमसीतिवाक्यान्मुमुक्षोः प्रत्यगात्मनि ब्रह्मस्वरूपेऽहं ब्रह्मास्मीति प्रमितिर्भवतीत्यर्थः ॥ ३३ ॥

यदस्माभिस्तृतीयेऽध्याये वीक्षापन्नस्य कोऽसीत्याद्यभिहितं यश्च नवसंख्यापहृतज्ञान इत्युदाहरणपूर्वकमपविद्धद्वयोऽप्येवमिति दार्ष्टान्तिकमुक्तं तदपि न स्वोत्प्रेक्षामात्रमाचार्यैरपि दर्शितत्वादित्याह वीक्षाप-

"नवबुद्ध्यपहाराद्धि स्वात्मानं दशपूरणम् ।
अपश्यन् ज्ञातुमेवेच्छेत्स्वमात्मानं जनस्तथा" ॥ ३४ ॥
"अविद्याबद्धचक्षुष्ट्वात्कामापहृतधीः सदा ।
विविक्तं दृशिमात्मानं नेक्षते दशमं यथा" ॥ ३५ ॥

सोऽयमेवमविद्यापटलावगुण्ठितदृष्टिः सन् कथमुत्थाप्यत इत्याह ।

यथा स्वापनिमित्तेन स्वप्नदृक्प्रतिबोधितः ।
करणं कर्म कर्त्तारं स्वाप्नं नैवेक्षते स्वतः ॥ ३६ ॥
अनात्मज्ञस्तथैवायं सम्यक् श्रुत्यावबोधितः ।
गुरुशास्त्रं तथा मूढं स्वात्मनोऽन्यं न पश्यति ॥ ३७ ॥

---

नवेति । नवैव वयमिति संख्याभिनिवेशादपहृतदशमज्ञानो जनः स्वव्यतिरिक्तान्नव पुरुषान्वीक्षमाणोऽपि यथा विभ्रमादात्मानं दशसंख्यापूरकमजानानो वेदितुमिच्छति तथाविद्याप्रतिबद्धसम्यग्दर्शनो विषयाभिषङ्गलक्षणकामेन विषयाभिमुखमपहृतचित्तः समस्तद्वैतनिर्मुक्तं सर्वसाक्षिणमपरोक्षमात्मानं दशममिव न प्रतिपद्यत इति श्लोकद्वयार्थः ॥ ३४ ॥ ३५ ॥

नन्वेवमविद्याप्रतिबद्धसम्यग्दर्शनस्य श्रुत्यादिदर्शनकारणानि किं सत्यान्युतासत्यानि । सत्यत्वेऽद्वैतव्याघातोऽसत्यत्वे च न सम्यग्दर्शनकारणमित्याशङ्क्योत्तरश्लोकाभ्यां दृष्टान्तप्रदर्शनपुरःसरं परिहारमाह सोऽयमित्यादिना । यथा स्वप्नदृग्चोरव्याघ्रादिकस्य स्वाविद्यापरिकल्पितस्य दर्शननिमित्तभयवशात्सहसा प्रतिबुद्धः स्वप्नदशायां स्वाज्ञानकल्पितं करणादिकं स्वतो विलक्षणं नेक्षते तथानाद्यविद्यानिद्रापरवशः स्वाविद्यापरिकल्पितश्रुत्याचार्यादिवशादहमस्मि परं ब्रह्मेति प्रतिबुद्धः स्वातिरिक्तं श्रुत्याचार्यादिकं न पश्यति तेन श्रुत्याचार्यादेरविद्याविवर्त्तत्वान्नाद्वैतव्याघातो नापि विद्यानुदयस्तथाभूतेभ्योऽपि विद्योदयस्य दर्शितत्वादिति भावः ॥ ३६ ॥ ३७ ॥

स किं सकलसंसारप्रविविक्तमात्मानं वाक्यात्प्रतिपद्यत उत नेतीत्यत्र ब्रूमः । कूटस्थावगतिशेषमात्रत्वात्प्रतिपत्तेरत आह ।

दण्डावसाननिष्ठः स्याद्दण्डसर्पो यथा तथा ।
नित्यावगतिनिष्ठं स्याद्वाक्याज्जगदसंशयम् ॥ ३८ ॥

कुत एतत् । यस्मात् ।

पश्यन्निति यदाहोच्चैः प्रत्यक्तमजमव्ययम् ।
अपूर्वानपरानन्तं त्वमा तदुपलक्ष्यते ॥ ३९ ॥

---

ननु भवत्वेवं बोधोत्पत्तिस्तथापि किं प्रपञ्चाद्भेदेन ब्रह्मावबोध्यत उताभेदेन । आद्येऽद्वैतव्याघातो द्वितीये च सप्रपञ्चत्वमित्याशङ्क्य प्रपञ्चस्यात्मन्यविद्याध्यारोपितत्वान्न ततो भेदेन नाप्यभेदेनासौ बोध्यते किन्त्वन्वयव्यतिरेकाभ्यां भावपरिहारेण तावन्मात्रतयेति दृष्टान्तेन दर्शयति स किमित्यादिना । कूटस्थावगतिशेषमात्रत्वात्प्रतिपत्तेरिति । कूटस्थावगतिरेव यथा शिष्यते तावन्मात्रैव प्रतिपत्तिर्न पुनः प्रपञ्चभावाभावावलम्बिनीत्यर्थः । दण्डावसाननिष्ठः स्यादिति । दण्डरूपेणावसानं पर्यवसानं तदेव निष्ठा काष्ठा यस्य दण्डे परिकल्पितसर्पस्य स तथोक्तः । नहि तत्र सर्पस्य दण्डे भावरूपता बाध्यत्वात् । नापि तत्राभावः कल्पितसर्पस्य प्रतियोगित्वेन क्वाप्यभावात् । तदेवमन्वयव्यतिरेकाभ्यां भावाभावपरिहारेण यथा सर्पस्य दण्डतावन्मात्रत्वं तथा जगतोऽप्यवगतिरूपब्रह्ममात्रत्वमित्यर्थः ॥ ३८ ॥

उक्तेऽर्थे हेतुपरत्वेनोत्तरश्लोकमवतारयति कुत एतदिति । यस्मादिति । अयं शब्दस्त्वमा तदुपलक्ष्यत इत्यनेन सम्बध्यते । "यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं पश्येदि"ति यन्निरस्तसमस्तद्वैतं कूटस्थदृष्टिमात्मानं सुषुप्त्यवस्थायां दर्शयति तदेवापूर्वादिलक्षणं वस्तु

तत्त्वमस्यादिवाक्योत्थविज्ञानेनैव बाध्यते । यस्मात् ।

अस्माद्यदपरं रूपं नास्तीत्येव निरूप्यते ।

अन्यथाग्रहणाभावाद्बीजं तत्स्वप्नबोधयोः ॥ ४० ॥

अस्यार्थस्य द्रढिम्न उदाहरणम् ।

"कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ ।

प्राज्ञः कारणबद्धस्तु द्वौ तौ तुर्ये न सिध्यतः" ॥४१॥

---

त्वम्पदेन लक्ष्यते यस्मात्तस्मात्तद्विपरीतं द्वैतजातमविद्याध्यारोपितं विद्यया निवर्त्यमानमात्ममात्रावशेषमेव निवर्त्यत इति भावः ॥ ३९ ॥

निरस्तसमस्तद्वैतं वस्तु सुषुप्त्यवस्थायां स्वत एव सिद्धं चेत्किं तत्त्वमस्यादिवाक्यजन्यविज्ञानेन तेन विनापि तस्य सिद्धत्वादित्याशङ्क्याह तत्त्वमस्यादीति । यस्मादविद्या पूर्वोक्तन्यायेन तत्त्वमस्यादिवाक्योत्थविज्ञानेनैव बाध्यते तस्मादविद्यानिवृत्तये वाक्यमपेक्षणीयमित्यर्थः । ननु यद्यविद्यानिवृत्तिस्तत्त्वमस्यादिवाक्योत्थविज्ञानेनैव क्रियते कथं तर्हि निर्विशेषं वस्तु सुषुप्त्यवस्थायां सिद्धमिति न तु तद्द्वितीयमस्तीत्यादिश्रुत्योच्यत इत्याशङ्क्याह अस्माद्यदपरमिति । सुषुप्तिदशायामन्यथाग्रहणाभावाद्द्वैतरूपग्रहणाभावाद्द्वैतरूपजाग्रत्स्वप्नयोरभावादस्मात्प्रकृतादात्मनोऽपरं रूपं नास्तीति "न तु तद्द्वितीयमस्ती"त्यादिश्रुत्या निरूप्यते न तु तत्कारणस्याग्रहणाभावात्तच्चाग्रहणं स्वप्नप्रबोधयोर्बीजं तत्रास्त्येव तेन तन्निवर्त्तकं वाक्यमपि सार्थकमित्यर्थः ॥ ४० ॥

वाक्यश्रवणे सत्येवाग्रहणं निवर्त्तते ततः प्राक्सुषुप्तेस्तन्निवृत्तिर्नास्तीति यदुक्तं तत्र प्रमाणत्वेन गौडपादीयवाक्यमुदाहरति अस्येत्यादिना । कार्यमन्यथाग्रहणं कारणं तत्त्वाग्रहणं । ताभ्यां बद्धौ संगृहीतौ जाग्रत्स्वप्नाभिमानिनौ विश्वतैजसौ । प्राज्ञः पुनः सुषुप्त्यभिमानी कारणेनैव तत्त्वाग्रहणेनैव बद्धः । द्वावप्येतौ कार्यकारणपदार्थौ तुर्यावस्थायां न सिध्यतो न सम्भवत इत्यर्थः ॥ ४१ ॥

"अन्यथागृह्णतः स्वप्नो निद्रा तत्त्वमजानतः ।
विपर्यासे तयोः क्षीणे तुरीयं पदमश्नुते" ॥ ४२ ॥

तथा भगवत्पादीयमुदाहरणम् ।

"सुषुप्ताख्यं तमोऽज्ञानं बीजं स्वप्नप्रबोधयोः ।
स्वात्मबोधप्रदग्धं स्याद्बीजं दग्धं यथाभवम्" ॥४३॥

एवं गौडैर्द्राविडैर्नः पूज्यैरयमर्थः प्रभाषितः ।
अज्ञानमात्रोपाधिः सन्नहमादिदृगीश्वरः ॥ ४४ ॥

तत्रान्यथाग्रहणवदन्यथाग्रहणबीजमग्रहणमनात्मधर्म एवेत्याह ।

---

कदा पुनस्तुरीयपदप्राप्तिरित्याशङ्क्याह अन्यथेति । स्वप्नजागरितयोस्तत्त्वमन्यथागृह्णतः स्वप्नो विपरीतग्रहणम् । तत्त्वमजानतः सुषुप्त्यवस्थायां निद्रा तत्त्वाग्रहणं बीजाज्ञानं । तत्र जाग्रत्स्वप्नावन्यथाग्रहणप्रधानत्वात्कार्यस्थानम् । सुषुप्तिः केवलाग्रहणप्रधानत्वात्कारणस्थानं । तयोश्च कार्यकारणस्थानयोर्विपर्यासे विपरीतग्रहणलक्षणे केवलाग्रहणलक्षणे च तत्त्वप्रतिबोधतः क्षीणे तुरीयं पदं प्राप्नोतीत्यर्थः ॥ ४२ ॥

उपदेशसाहस्र्यामप्येतदुक्तमित्याह तथेति । सुषुप्ताख्यमिति । सुषुप्तं तमोऽज्ञानमिति पर्यायास्तदेवं शब्दवाच्यमज्ञानं स्वप्नप्रबोधयोर्बीजं स्वात्मबोधेन प्रकर्षेण दग्धं सदभवं न पुनः कामकर्मादिप्रसवार्थं स्यात् । दग्धबीजमिवेति वदन्सुषुप्तावज्ञानसद्भावं तस्यात्मज्ञाननिवर्त्यत्वं च दर्शयतीत्यर्थः ॥ ४३ ॥

उपसंहरति एवमिति । गौडैर्गौडपादाचार्यैरस्मदाराध्यैः । द्राविडैर्भगवत्पूज्यपादाचार्यैः । पञ्च द्राविडा इति केवलानामपि द्राविडत्वप्रसिद्धेः । कोऽसावर्थो भाषित इत्यत आह अज्ञानमात्रेति । ईश्वरः परमात्मैवाज्ञानमात्रोपाधिरहङ्कारादीनां साक्षितया जीवत्वेनावस्थित इत्यस्मदुक्तं तेषामप्यभिमतमित्यर्थः ॥ ४४ ॥

ननु "तम आसीत्" "आसीदिदं तमोभूतमि"ति श्रुतिस्मृतिप्रसि-

इदं ज्ञानमहं ज्ञाता ज्ञेयमेतदिति त्रयम् ।
योऽविकारो विजानाति परागेवास्य तत्तमः ॥४५॥

यत एतदेवमतस्तस्यैव बीजात्मनस्तमसश्चित्तधर्मविशिष्टस्य स्वकार्यद्वितीयाभिसम्बन्धो न त्वविकारिण आत्मन इत्याह दृष्टान्तेन ।

रूपप्रकाशयोर्यद्वत्संगतिर्विक्रियावतः ।
सुखदुःखादिसम्बन्धश्चित्तस्यैवं विकारिणः ॥ ४६ ॥

तदेतदन्वयव्यतिरेकाभ्यां दर्शयिष्यन्नाह ।

सम्प्रसादेऽविकारित्वादस्तं याते विकारिणि ।
पश्यतो नात्मनः किञ्चिद्द्वितीयं स्पृशतेऽण्वपि ॥४७॥

---

द्धस्य जगद्बीजस्याज्ञानस्य परमेश्वरशक्तितया तदभेदात्कथं तस्य ज्ञाननिवर्त्यत्वमित्यत आह तत्रेति । ज्ञानादित्रयमनापन्नविकारतया योऽवभासयति तस्य परागेव बहिरेव तमस्तस्यात्मनः स्वरूपं धर्मश्च न भवति जडत्वाद्दृश्यत्वाच्च । आत्मशक्तित्वव्यपदेशश्चास्य सत्ताप्रतीत्योस्तत्परतन्त्रत्वादेवेतिभावः ॥ ४५ ॥

ननु सुखदुःखादिसम्बन्धवदज्ञानसम्बन्धोऽप्यात्मनः किं न स्यादित्याशङ्क्याविकारित्वादेवात्मनः सुखदुःखसम्बन्धासम्भवान्नैवमिति दृष्टान्तेन दर्शयति यत एतदेवमित्यादिना । आत्मा विकाररहित एव जानाति यतस्ततश्चित्ताख्यपरिणामविशिष्टस्यैवाज्ञानस्य द्वितीयसम्बन्धो न त्वात्मनस्तस्य त्वज्ञानजनितचित्तोपाधिद्वारा भवति न तु स्वभावत इत्यर्थः । रूपप्रकाशयोरिति । सुखदुःखादिसम्बन्धोऽपि विक्रियावत एव भवितुमर्हति सम्बन्धत्वाद्रूपप्रकाशसम्बन्धवदित्यर्थः ॥ ४६ ॥

सति चित्तसम्बन्धे सुखदुःखादिसम्बन्धो नास्तीत्युक्तमर्थमन्वयव्यतिरेकाभ्यां दर्शयितुमुत्तरश्लोक इत्याह तदेतदिति । संप्रसादे सुषुप्तिसमये विकारिणि चित्तेऽस्तं याते सत्यात्मनोऽविकारित्वात्कूटस्थदृष्टित्वा-

सोऽयं कूटस्थज्ञानमूर्तिरात्मा ।

यथा प्राज्ञे तथैवायं स्वप्नजागरितान्तयोः ।
पश्यन्नप्यविकारित्वाद्द्वितीयं नैव पश्यति ॥ ४८ ॥
एवं ज्ञानवतो नास्ति ममाहम्मतिसंश्रयम् ।
भास्वत्प्रदीपहस्तस्य ह्यन्धकार इवाग्रतः ॥ ४९ ॥

तत्र दृष्टान्तः ।

आप्रबोधाद्यथा सिद्धिर्द्वैतादन्यस्य वस्तुनः ।
बोधादेवमसिद्धत्वं बुद्ध्यादेः प्रत्यगात्मनः ॥ ५० ॥

स एष विद्वान्हानोपादानशून्यमात्मानमात्मनि पश्यन् ।

सर्वमेवानुजानाति सर्वमेव निषेधति ।
भेदात्मलाभोऽनुज्ञा स्यान्निषेधोऽतत्स्वभावतः॥५१॥

---

त्पश्यतोऽपि तस्यात्मनो नाण्वपि द्वितीयं स्पृशते नात्मना सम्बध्यत इत्यर्थः ॥ ४७ ॥

संप्रसाद इतिविशेषणादितरावस्थयोर्द्वितीयसम्बन्धोऽभिमत इत्याशङ्क्य तयोरप्यवस्थयोः परमार्थतस्तत्स्पर्शाभावं दर्शयति सोऽयमित्यादिना । प्राज्ञावस्थायामिव स्वप्नजागरितयोरप्यात्मनो द्वितीयसंस्पर्शो नास्तीत्यर्थः । अत्रान्तशब्दः स्वरूपवचनः ॥ ४८ ॥

अवस्थात्रयेऽपि कूटस्थ आत्मेति विजानतः फलमाह एवमिति । ममाहमिति । यदिदं ज्ञानद्वयमन्तःकरणाश्रयं तदेवंविदो नास्तीत्यर्थः॥४९॥

आप्रबोधादिति । द्वैतादन्यवस्तुविषयबोधपर्यन्तं द्वैतसिद्धिर्यथा तथा बाधकबोधोदयादूर्ध्वं तस्यासिद्धिर्युक्तैवेत्यर्थः । यद्वा । बोधात्पूर्वं यथा द्वैतादन्यस्याद्वितीयवस्तुनोऽसिद्धिरेवं बोधादूर्ध्वं प्रत्यगात्मनो बुद्ध्यादिसम्बन्धासिद्धिरित्यर्थः ॥ ५० ॥

विदुषोऽनुभवप्रकारमिदानीं दर्शयति स एष इति । कथमेतद्विरुद्धमभिधीयत इत्यत आह भेदात्मेति । व्यवहारदृष्ट्या द्वैतप्रपञ्चस्य स्वरूपलाभोऽनुज्ञा तत्त्वदृष्ट्या तदभावो निषेध इत्यर्थः ॥ ५१ ॥

सर्वस्योक्तत्वादुपसंहारः ।

परमार्थात्मनिष्ठं यत्सर्ववेदान्तनिश्चितम् ।
तमोऽपनुद्धियां ज्ञानं तदेतत्कथितं मया ॥ ५२ ॥

एतावदिहोक्तम् ।

नेहात्मविन्मदन्योऽस्ति न मत्तोऽज्ञोऽस्ति कश्चन ।
इत्यजानन्विजानाति यः स ब्रह्मविदुत्तमः ॥ ५३ ॥

एवमात्मानं ज्ञात्वा किं प्रवर्त्तितव्यमुत निवर्त्तितव्यमाहोस्विन्मुक्तप्रग्रहतेति । उच्यते ।

---

इदानीं प्रकरणमुपसंहरति सर्वस्येति । सर्ववेदान्तनिश्चितं स्वान्तान्धकारनिवर्त्तकं यज्ज्ञानं परमार्थवस्तुविषयं तदेतदस्मिन्प्रकरणे मया कथितं नातः परं ज्ञातव्यमवशिष्यत इत्यर्थः ॥ ५२ ॥

सांख्यानामिव नानात्मवादशङ्कानिरासार्थं पुनरपि सङ्क्षेपोक्तमर्थं दर्शयति एतावदिति । विजानातीत्युक्ते ज्ञानपरिणामित्वं प्राप्तमित्यत आह अजानन्निति । अपरिणामिना कूटस्थचैतन्येनैवानुभवतीत्यर्थः । यद्वा । स्वात्मानं विजानाति चेत्तस्य कर्मत्वं कर्त्तृत्वं च स्यादिति विशिनष्टि अजानन्निति । वृत्तिज्ञानात्कर्मत्वेनाजानन्नपि स्वरूपचैतन्येन स्वयंप्रकाशतयाऽनुभवतीत्यर्थः । सोपाधिकचैतन्यानामुपाधिप्रधानत्वादुपाधिभेदवदेव परिकल्पिततया ज्ञानाज्ञानाश्रयत्वायोगादपास्तसमस्तोपाधेरद्वैतचैतन्यस्यैव मम तदाश्रयत्वमिति भावः । इह लोके मत्तोऽन्यः कश्चिदात्मविषयाज्ञानाश्रयो नास्ति नापि तद्विषयज्ञानाश्रयः किंत्वहमेक एव ज्ञानाज्ञानाश्रयो मत्तोऽन्यस्य चैतन्यस्याभावादित्यद्वैतमात्मानं वृत्तिज्ञानेनाजानन्स्वरूपचैतन्येन स्वयंप्रकाशतया विजानाति स ब्रह्मविदुत्तम इत्यक्षरयोजना ॥ ५३ ॥

एवं तत्त्वविचारं समाप्य तत्त्वविदश्चर्यामिदानीं निरूपयन्किं ब्रह्मविदा वर्णाश्रमधर्मेषु प्रवर्त्तितव्यमुत तेभ्यो निवर्त्तितव्यमथवा स्वच्छ-

ज्ञेयाभिन्नमिदं यस्माज्ज्ञेयवस्त्वनुसार्यतः ।
न प्रवृत्तिं निवृत्तिं वा कटाक्षेणापि वीक्षते ॥ ५४ ॥

कुत एतज्ज्ञेयाभिन्नमिति । यतः ।

प्रागात्मबोधाद्बोधोऽयं बाह्यवस्तूपसर्जनः ।
प्रध्वस्ताखिलसंसार आत्मैकालम्बनः श्रुतेः ॥ ५५ ॥

एवमवगतपरमार्थतत्त्वस्य न शेषशेषिभावस्तत्कारणस्योत्सारितत्वादित्याह ।

वास्तवेनैव वृत्तेन निरुणद्धि यतो भवम् ।
निवृत्तिमपि मृद्नाति सम्यग्बोधः प्रवृत्तिवत् ॥ ५६ ॥

---

न्दं वर्त्तितव्यमिति पृच्छति एवमिति । ज्ञानस्य ज्ञेयाद्वैतचैतन्याभिन्नतया तदनुसारित्वाज्ज्ञेयस्य च प्रवृत्तिनिवृत्तिशून्यस्वभावत्वात्तद्रूपेण ब्रह्मविदोऽवस्थानं न तु प्रवृत्तिनिवृत्त्यादिसम्बन्ध इत्युत्तरमाह उच्यत इति ॥ ५४ ॥

ज्ञानस्य ज्ञेयाभिन्नत्वं कुत इत्याशङ्क्य तदुत्तरत्वेन श्लोकमवतारयति कुत एतदित्यादिना । "यत्र वान्यदिव स्यात्तत्रान्योऽन्यत्पश्येद्यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदिति" श्रुतेरविद्यावस्थायां ज्ञानस्य भेदावलम्बनत्वं विद्योदयेनाशेषसंसारनाशे त्वात्मैकमात्रपर्यवसानमवसीयत इत्यर्थः ॥ ५५ ॥

ननु विदुषः प्रवृत्तिधर्माणामभावेऽप्यमानित्वादयो निवृत्तिधर्मा विद्यन्तेऽतस्तद्विधिशेष एवायं विद्वानित्याशङ्क्य तत्रापि वस्तुस्वभावात्प्रवर्त्तते न तु शास्त्रान्नियोज्यत्वकारणभूतार्थित्वहेत्वविद्यायास्तत्त्वज्ञानेन निवृत्तत्वादित्याह एवमिति । वास्तवेनैवेति । यतः सम्यग्बोधः प्रवृत्तिनिवृत्तिशून्यात्मवस्तुवृत्तानुरोधेन संसारं निवर्त्तयत्यतो वैधप्रवृत्तिवद्वैधनिवृत्तिमपि निवर्त्तयति तस्माद्वस्तुस्वभावादेवामानित्वादौ विद्वान्वर्त्तत इत्यर्थः ॥ ५६ ॥

सकृदात्मप्रसूत्यैव निरुणद्ध्यखिलं भवम् ।
ध्वान्तमात्रनिरासेन न ततोऽन्यान्यथामतिः ॥ ५७ ॥
देशकालाद्यसम्बद्धाद्देशादेर्मोहकार्यतः ।
नानुत्पन्नमदग्धं वा ज्ञानमज्ञानमस्त्यतः ॥ ५८ ॥
सम्यग्ज्ञानशिखिप्लुष्टमोहतत्कार्यरूपिणः ।
सकृन्निवृत्तेर्बोध्यस्य किं कार्यमवशिष्यते ॥ ५९ ॥

---

ननु यदि सम्यग्बोधः स्वोत्पत्तिमात्रेणैव संसारं निवर्त्तयेत्तदैवं स्यान्न त्वेतदस्ति तस्यानादिकालप्रवृत्तमिथ्याज्ञानतत्संस्कारनिरासायाभ्यासापेक्षत्वात्तदवसरे च निवृत्तिविधीनामपि सावकाशत्वादित्यत आह सकृदिति । स्वोत्पत्तिमात्रेणाविद्यानिवर्त्तकत्वे गृहीतान्वयव्यतिरेकः सम्यग्बोधः स्वोत्पत्तिमात्रेणाविद्यां निवर्त्तयंस्तदानीमेव मिथ्याज्ञानतत्संस्कारलक्षणं सकलमपि संसारं निवर्त्तयति न त्वभ्यासादिकमपेक्षत इत्यर्थः । कुतस्तदानीमेव मिथ्याज्ञानादिकं निवर्त्तयतीत्यत आह न ततोऽन्येति । मिथ्याज्ञानादिरविद्याकार्यत्वान्नाविद्यातो विलक्षणस्तस्मादविद्यां निवर्त्तयन्बोधस्तदानीमेव मिथ्याज्ञानादिकं निवर्त्तयतीत्यर्थः ॥ ५७ ॥

ननु कथं सकृदेव सकलाज्ञाननिवर्त्तकं ज्ञानमुत्पद्यते यावता लोके प्रमाणज्ञानानां स्वदेशकालोपाधावेव स्वविषयाज्ञाननिवर्त्तकत्वं न तु सकलाज्ञाननिवर्त्तकत्वं दृश्यत इत्याशङ्क्याह देशकालेति । घटादीनां देशकालावस्थादिपरिच्छिन्नत्वाज्जडत्वाच्च तद्विषयज्ञानानां देशकालाद्यपेक्षया तत्तदज्ञाननिवर्त्तकत्वेऽप्यात्मनोऽविद्याकार्यदेशकालादिभिरसंस्पृष्टत्वात्स्वयंप्रभत्वाच्च तत्रानिवृत्तमज्ञानान्तरं तन्निवृत्तयेऽपेक्षितमनुत्पन्नं ज्ञानान्तरं वा नास्तीत्यर्थः । अनुत्पन्नं ज्ञानमदग्धमज्ञानं वा नास्तीत्यन्वयः ॥ ५८ ॥

तस्मात्सम्यग्ज्ञानोत्पत्तौ सकलाज्ञाननिवृत्तेर्न शेषशेषिभाव इति युक्तमेवोक्तमित्युपसंहरति सम्यगिति । सम्यग्ज्ञानाग्निना दग्धाविद्यातत्कार्यस्वभावस्यात्मनः कार्यं किंचिन्नावशिष्यते बाधयोग्यस्य सर्वस्य सकृदेव निवृत्तत्वात्ततश्च न शेषशेषिभाव इत्यर्थः ॥ ५९ ॥

वास्तवेनैव वृत्तेनाविद्यायाः प्रध्वस्तत्वान्न किञ्चिदवशिष्यत इत्युक्तः परिहारः । अथापरः साम्प्रदायिकः ।

निवृत्तसर्पः सर्पोत्थं यथा कम्पं न मुञ्चति ।
विध्वस्ताखिलमोहोऽपि मोहकार्यं तथात्मवित् ॥ ६० ॥

यतः प्रवृत्तिबीजमुच्छिन्नं तस्मात् ।

तरोरुत्खातमूलस्य शोषेणैव यथा क्षयः ।
तथा बुद्धात्मतत्त्वस्य निवृत्त्यैव तनुक्षयः ॥ ६१ ॥

अथालेपकपक्षनिरासार्थमाह ।

बुद्धाद्वैतसतत्त्वस्य यथेष्टाचरणं यदि ।
शुनां तत्त्वदृशां चैव को भेदोऽशुचिभक्षणे ॥ ६२ ॥

---

एवं सद्योमुक्तिपक्षमङ्गीकृत्य शेषशेषिभावः परिहृतः सांप्रतं जीवन्मुक्तिपक्षेऽपि न शेषशेषिभाव इत्युत्तरग्रन्थस्य तात्पर्यमाह वास्तवेनैवेत्यादिना । सम्यग्बोधाद्बाधितसर्पविभ्रमस्य पुंसो यथा भयकम्पादिकं कंचित्कालमनुवर्त्तते तथा विदुषोऽपि बाधितोऽपि संसारः प्रारब्धकर्मफलभोगपर्यन्तमनुवर्त्तेत इत्यर्थः ॥ ६० ॥

भवत्वेवं तथापि कथं शेषशेषिभावासम्भव इत्यत आह यत इति । विविधवैधप्रवृत्तिबीजमविद्याकामादिकं सम्यग्ज्ञानादुच्छिन्नमिति यतस्ततश्च न शेषशेषिभावस्ततश्च निवृत्त्या प्रारब्धकर्मणो भोगेनैव निवृत्त्या प्रातिभासिकस्य शरीरादेः क्षय इत्यर्थः ॥ ६१ ॥

ननु विदुषो दृश्यमानानां प्रवृत्तीनां विधिनिबन्धनत्वाभावेऽपि रागद्वेषादिनिबन्धनत्वं स्यात्तथा च न स्वैरचेष्टायां दोष इति प्राप्तमित्याशङ्क्य तन्निरासायोत्तरश्लोक इत्याह अथेत्यादिना । तत्त्वदृशां संस्कारवशान्मनुष्यत्वजात्युचितैव प्रवृत्तिर्न तु यत्किंचिज्जात्युचितेति यथा त्वयेष्यते तथा प्रातिभासिकवर्णाश्रमोचितैव प्रवृत्तिस्तत्संस्कारवशाद्भवति नेतरेत्यभ्युपेयं तस्मान्न स्वैरचेष्टाप्रसङ्ग इत्यर्थः ॥ ६२ ॥

कस्मान्न भवति । यस्मात् ।

अधर्माज्जायतेऽज्ञानं यथेष्टाचरणं ततः ।
धर्मकार्ये कथं तत्स्याद्यत्र धर्मोऽपि नेष्यते ॥ ६३ ॥
प्रत्याचक्षाण आहातो यथेष्टाचरणं हरिः ।
"यस्य सर्वे समारम्भाः" "प्रकाशं चे"ति सर्वदृक्॥६४॥

तिष्ठतु तावत्सर्वप्रवृत्तिबीजघस्मरं ज्ञानं मुमुक्ष्ववस्थायामपि न सम्भवति यथेष्टाचरणम् । तदाह ।

"योहि यत्र विरक्तः स्यान्नासौ तस्मै प्रवर्तते ।
लोकत्रयविरक्तत्वान्मुमुक्षुः किमितीहते" ॥ ६५ ॥

---

ननु वर्णाश्रमाभिमानस्यागन्तुकत्वात्स्वभावसिद्धत्वाच्च जात्यभिमानस्य मनुष्यत्वजातिमात्रोचितैव प्रवृत्तिस्तत्संस्कारवशात्किं न स्यादिति विशेषहेतुर्वाच्य इत्याशङ्क्योत्तरश्लोकेन परिहरति कस्मादित्यादिना । जन्मान्तरानुष्ठिताधर्मवशादभक्ष्यभक्षणादौ कर्त्तव्यताबुद्धिस्ततश्च यथेष्टाचरणं । ज्ञानं पुनरत्यन्तोत्कृष्टपुण्यकार्यं "धर्मात्सुखं च ज्ञानं चेति"वचनात् । यस्मिंश्च ज्ञाने सति प्रवर्त्तककामादिदोषाणामत्यन्तमुच्छिन्नत्वाद्धर्मेऽपि प्रवृत्तिर्न भवति तथाभूते ज्ञाने सति कथं यथेष्टाचरणम् । "भावितैः करणैरेभिर्बहुसंसारयोनिषु । आसादयति शुद्धात्मा मोक्षं वै प्रथमाश्रमे । अनेकजन्मसंसिद्धस्ततो याति परां गतिमि"ति स्मरणादतीतानेकजन्मस्वपि यथेष्टाचरणाभावेन तत्संस्कारस्याप्यभावान्न तद्वशादपि यथेष्टाचरणमित्यर्थः ॥ ६३ ॥

विदुषो यथेष्टाचरणाभावे भगवद्वचनमपि प्रमाणमित्याह प्रत्याचक्षाण इति ॥ ६४ ॥

इदानीं कैमुतिकन्यायेनापि विदुषो यथेष्टाचरणाभावमाह तिष्ठत्वित्यादिना । मुमुक्षुरपि यत्र न चेष्टते तत्र मुक्तो न चेष्टत इति किमु वक्तव्यमित्यर्थः ॥ ६५ ॥

तत्र दृष्टान्तः ।

"क्षुधया पीड्यमानोऽपि न विषं ह्यत्तुमिच्छति ।
मिष्टान्नध्वस्ततृड् जानन्नामूढस्तज्जिघत्सति" ॥६६॥

यतोऽवगतपरमार्थतत्त्वस्य यथेष्टाचरणं न मनागपि घटते मुमुक्षुत्वेऽपि च । तस्मात् ।

रागो लिङ्गमबोधस्य चित्तव्यायामभूमिषु ।
कुतः शाड्वलता तस्य यस्याग्निः कोटरे तरोः ॥६७॥

सकलपुरुषार्थसमाप्तिकारिणोऽस्यात्मावबोधस्य कुतः प्रसूतिरिति । उच्यते ।

---

किमु वक्तव्यन्यायमेव दृष्टान्तेन स्पष्टयति तत्र दृष्टान्त इत्यादिना । यथा लोके क्षुत्क्षामस्तन्निवृत्तिसाधने प्रयतमानोऽप्यतत्साधने प्रत्युत प्रतिकूले विषदूषितान्ने न प्रवर्त्तते तत्र मिष्टान्नेन ध्वस्ततृष्णस्तस्य विषदूषितत्वं जानन्विवेकी न तदत्तुमिच्छतीति किमु वक्तव्यं तथा मुमुक्षुरप्राप्तपरमपुरुषार्थस्तत्साधने प्रवर्त्तमानोऽप्यनित्यत्वादिदोषदूषितैहिकामुष्मिकादिसुखेभ्यो विरक्तस्तत्साधनेषु न प्रवर्त्तते तत्र किमु वक्तव्यं परब्रह्मानन्दानुभवपरितृप्तो विद्वान्बहुलायासपरिक्लिष्टेषु वैषयिकसुखलवेषु न प्रवर्त्तेत इति भावः ॥ ६६ ॥

यस्मात्सिद्धस्य साधकस्य च न रागद्वेषनिबन्धने प्रवृत्तिनिवृत्ती भवतस्तस्मात्प्रवृत्त्यादिनानुमितो रागोऽविद्यत्ताया एव लिङ्गमित्युपसंहरति यत इत्यादिना । चित्तव्यायामभूमिषु चित्तस्य स्वारसिकप्रवृत्त्यालम्बनेषु शब्दादिषु यो रागः सोऽयमबोधस्य लिङ्गं । तत्र दृष्टान्तः कुत इति । यथा यत्राग्निस्तत्र न शाड्वलता तथा यत्र रागस्तत्र न बोध इत्यर्थः ॥ ६७ ॥

एवं प्रसङ्गागतमलेपकपक्षनिरासं समाप्य पूर्वोदिततत्त्वम्पदार्थविवेकमात्रस्यैव ज्ञानसाधनत्वमिति शङ्कानिरासाय सम्यग्दर्शनसाधनानि

अमानित्वादिनिष्ठो यो यश्चाद्वेष्ट्रादिसाधनः ।
ज्ञानमुत्पद्यते तस्य न बहिर्मुखचेतसः ॥ ६८ ॥

उत्पन्न आत्मविज्ञाने किमविद्याकार्यत्वात्प्रवृत्तिवन्निवृत्त्यात्मकामानित्वादयो निवर्त्तन्त उत नेति। नेति ब्रूमः । किं कारणम् । निवृत्तिशास्त्राविरुद्धस्वाभाव्यात्परमात्मनो न तु नियोगवशात् । कथं तर्हि । शृणु ।

उत्पन्नात्मप्रबोधस्य त्वद्वेष्टृत्वादयो गुणाः ।
अयत्नतो भवन्त्यस्य न तु साधनरूपिणः ॥ ६९ ॥

यत एतदेवमतः ।

इमं ग्रन्थमुपादित्सुरमानित्वादिसाधनः ।
यत्नतः स्यान्न दुर्वृत्तः प्रत्यग्धर्मानुगो ह्ययम् ॥ ७० ॥

---

संकलय्य दर्शयति सकलेति । "अमानित्वमदम्भित्वमद्वेष्टा सर्वभूतानामि"त्यादिभगवद्गीतोक्तगुणवत एव सम्यग्ज्ञानोत्पत्तिर्न विषयाभिमुखचेतस इत्यर्थः ॥ ६८ ॥

ननु साधकस्यामानित्वादिकं साधनं चेत्सिद्धस्य तर्हि साध्याभावे महाबाहो साधनैः किं प्रयोजनमिति न्यायेन तेषामविद्याकार्याणां विद्याविरोधाच्चासम्भवः सम्भवे वा निवृत्तिशास्त्रनियोज्यत्वं विदुषः प्रसज्येतेत्याशङ्क्य विधितस्तेषां नियोज्यत्वाभावेऽपि विद्याविषयपरमार्थात्मस्वभावाविरोधादयत्नसाध्या अमानित्वादयो विदुषो लक्षणत्वेनानुवर्त्तन्त इति परिहरति उत्पन्न इत्यादिना ॥ ६९ ॥

यस्मादेवं साधकस्य साधनत्वेन सिद्धस्य च लक्षणत्वेन सर्वथाप्यङ्गीकार्यास्तस्मात्परमहंसो ज्ञानसाधनभूतनैष्कर्म्यसिद्धिप्रकरणश्रवणाद्यभिमुखोऽप्यमानित्वादिनिष्ठो भवेदित्याह यत इत्यादिना । प्रत्यग्धर्म आत्मा प्रत्यक्चासौ धर्मश्चेति तमनुगच्छति तद्याथात्म्यप्रतिपत्तिप्रतिपादकत्वेनायं ग्रन्थ इति प्रत्यग्धर्मानुग इत्युक्तम् ॥ ७० ॥

न दातव्यश्चायं ग्रन्थः ।

नाविरक्ताय संसारान्नानिरस्तैषणाय च ।
न चायमवते देयं वेदान्तार्थप्रवेशनम् ॥ ७१ ॥

ज्ञात्वा यथोदितं सम्यग्ज्ञातव्यं नावशिष्यते ।
न चानिरस्तकर्मेदं जानीयादञ्जसा ततः ॥ ७२ ॥

निरस्तसर्वकर्माणः प्रत्यक्प्रवणबुद्धयः ।
निष्कामा यतयः शान्ता जानन्तीदं यथोदितम् ॥७३॥

श्रीमच्छङ्करपादपद्मयुगलं संसेव्य लब्ध्वोचिवान्
ज्ञानं पारमहंस्यमेतदमलं स्वान्तान्धकारापनुत् ।
मा भूदत्र विरोधिनी मतिरतः सद्भिः परीक्ष्यं बुधैः
सर्वत्रैव विशुद्धये मतमिदं सन्तः परं कारणम् ॥ ७४ ॥

---

एवं शिष्यस्य नियममभिधायाचार्यस्य नियममाह न दातव्य इति । यमा अहिंसादयस्ते यमादयो यस्य विद्यन्ते स यमवान् । न यमवानयमवान् । तस्मा अयमवते कुतो न देयमित्यत आह वेदान्तेति । वेदान्तानामर्थे प्रवेशोऽधिगमोऽनेनेतीदं प्रकरणं वेदान्तार्थप्रवेशनं तेन य एवं वेदान्तश्रवणादिष्वधिकृतो मुमुक्षुः स एवात्राधिकारीति नान्यस्तस्मात्कुतूहलाद्बहुश्रुतत्वादिबुद्ध्या वा प्रवर्त्तमानायेदं न देयमित्यर्थः ॥ ७१ ॥

ननु किमेतत्प्रकरणपरिज्ञानाद्भवति येनात्रानधिकारिणां प्रवेशो न सिद्ध्येदित्यत आह ज्ञात्वेति । तेन कुतूहलादिवशात्प्रवृत्तो न फलपर्यन्तं ज्ञानमधिगच्छतीत्यर्थः । न चानिरस्तेति ॥ ७२ ॥

के तर्हि प्रकरणार्थं सम्यक्प्रतिपद्यन्त इत्यत आह निरस्तेति ॥ ७३ ॥

इदानीमस्तत्प्रकरणस्य विशिष्टगुरुसंप्रदायपूर्वकत्वादत्र दोषदृष्टिर्माभूत्किन्तु यत्नात्सद्भिः परीक्षणीयमिदं प्रकरणं यतः सन्त एव गुणदोषावधारणे परं कारणं तस्मात्परीक्षणीयमेवेति विद्वज्जनेष्वात्मनोऽनौद्धत्यं दर्शयति श्रीमदिति । ऊचिवानुक्तवानित्यर्थः ॥ ७४ ॥

सुभाषितं चार्वपि नामहात्मनां
दिवाकरो नक्तदृशामिवामलः ।
प्रभाति भात्येव विशुद्धचेतसां
निधिर्यथापास्ततृषां महाधनः ॥ ७५ ॥

विष्णोः पादानुगां यां निखिलभवनुदं शङ्करोऽवाप योगात्
सर्वज्ञं ब्रह्मसंस्थं मुनिगणसहितं सम्यगभ्यर्च्य भक्त्या ।
विद्यां गङ्गामिवाहं प्रवरगुणनिधेः प्राप्य वेदान्तदीप्तां
कारुण्यात्तामवोचं जनिमृतिनिवहध्वस्तये दुःखितेभ्यः
॥ ७६ ॥

---

ये पुनरनुनीयमाना अनुनयादेवानुनेतुमशक्तिं मन्यन्ते दुर्विदग्धास्तान्प्रति साविष्कारमात्मनो वैदग्ध्यं दर्शयति सुभाषितमिति । निस्पृहाणां हि निधयः प्रकाशन्ते तदुक्तं भगवता पतञ्जलिना "रत्नोपस्थानमि"ति । अस्तेयप्रतिष्ठायामात्मस्पृहायां रत्नोपस्थानं सर्वदिक्कालस्योपतिष्ठन्ते रत्नानीत्यर्थः ॥ ७५ ॥

एवं विशिष्टगुरुसंप्रदायप्राप्तस्य प्रकरणस्य परानुग्रह एव प्रयोजनं न तु दृष्टमदृष्टं वा विद्यया कृतार्थत्वादिति दर्शयति विष्णोरिति । विष्णोर्व्यापिनो जगत्कारणस्य पदमधिष्ठानं सच्चिदानन्दैकरसमनुगच्छतीति विष्णोः पदानुगा विद्या । गङ्गापि विष्णोः पुरुषोत्तमस्य चरणमनुसृत्य गच्छतीति "वामपादाङ्गुष्ठनखस्रोतोविनिर्गतामि"ति स्मरणात् । पुनरपि विद्यागङ्गयोः समानं विशेषणमाह निखिलभवनुदमिति । यामेवंविधां विद्यां गङ्गां च भगवत्पादाचार्यः परमेश्वरश्च योगसामर्थ्यादवाप तमाचार्यं सर्वज्ञं ब्रह्मसंस्थं मुनिगणैः सहितं भक्त्या सम्यगभ्यर्च्य तस्मात्प्रवरगुणनिधेराचार्यात्तां वेदान्तदीप्तां परमेश्वरं समभ्यर्च्य तस्माद्भगीरथो वेदान्तदीप्तां सितासिते "इमं मे गङ्गे" इत्यादि वेदान्तप्रतिपाद्यां गङ्गामिव साकल्येनाहं प्राप्यार्थिभ्यः सकारणसंसारनिवृत्तये ऽवोचमित्यर्थः ॥ ७६ ॥

वेदान्तोदरवर्त्ति भास्वदमलं ध्वान्तच्छिदस्मद्धियो
दिव्यं ज्ञानमतीन्द्रियेऽपि विषये व्याहन्यते न क्वचित् ।
यो नो न्यायशलाकयैव निखिलं संसारबीजं तमः
प्रोत्सार्याविरकार्षीद्गुरुगुरुः पूज्याय तस्मै नमः ॥ ७७ ॥

सम्बन्धोक्तिरियं साध्वी प्रतिश्लोकमुदाहृता ।
नैष्कर्म्यसिद्धेर्ज्ञात्वेमां व्याख्यातासौ भवेद्ध्रुवम् ॥ ७८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छङ्करपूज्य-
पादशिष्यश्रीसुरेश्वराचार्यविरचितायां नैष्कर्म्य-
सिद्धौ सम्बन्धोक्तौ चतुर्थोऽध्यायः
समाप्तः ॥ ४ ॥

इति नैष्कर्म्यसिद्धिप्रकरणं समाप्तम् ॥

---

गुरुभक्तेर्विद्यां प्रत्यन्तरङ्गसाधनत्वं दर्शयितुं प्रकरणारम्भ इव प्रकरणपरिसमाप्तावपि गुरुनमस्कारं करोति वेदान्तेति । वेदान्तोदरवर्त्ति वेदान्तप्रमाणजन्यं भास्वच्छुद्धसत्त्वात्मकममलं रागादिदोषरहितं । ध्वान्तच्छिदस्मद्धियोऽस्मदन्तःकरणतमोनिवर्त्तकं । दिव्यं स्वयंप्रकाशाभिव्यञ्जकं । पुनरपि तदेव ज्ञानं विशिनष्टि अतीन्द्रियेऽपीति । यस्य ज्ञानस्यातीन्द्रियवस्तुविषयत्वान्न प्रत्यक्षादिविरुद्धार्थविषयत्वमित्यर्थः । एवंविधं ज्ञानं यो गुरूणामपि गुरुर्नोऽस्माकमाविरकार्षीदिति सम्बन्धः । किं कुर्वन्नाविरकार्षीत्तत्राह निखिलमिति । सकलसंसारबीजं तमो न्यायशलाकया प्रोत्सारयन्य एवमाविरकार्षीत्तस्मै नम इति सम्बन्धः । निचृच्छार्दूलविक्रीडितमेतत् । "न्यूनाधिकेनैकेन निचृद्भुरिजावि"त्युक्तत्वात् ॥ ७७ ॥

नैष्कर्म्यसिद्धेर्व्याख्यानक्षमतात्पर्यपरिज्ञाने किं कारणमित्याशङ्कायां सम्बन्धोक्तिरेवेत्याह सम्बन्धोक्तिरिति ॥ ७८ ॥

पद्कशतहतकुमारिलसौगतगुर्वक्षपादकणभक्षः ।
यमनियमनिलयधिषणो जयति श्रीसत्यबोधाचार्यः ॥ १ ॥
वस्तुख्यातिविघातिवादितिमिरं नैष्कर्म्यसिद्धिस्फुट-
व्याख्याचन्द्रिकया विधूय सुधियां सद्दृष्टिमुन्मीलयन् ।
अन्तः सम्भृतशान्तवेदनसुधोद्द्योतः समुद्द्योतते
सर्वज्ञाश्रमचन्द्रमास्त्रिजगतीसर्वज्ञचूडामणिः ॥ २ ॥

इति श्रीमहोपाध्यायज्ञानोत्तममिश्रविरचितायां नैष्कर्म्यसिद्धिचन्द्रिकायां चतुर्थोऽध्यायः समाप्तः ॥ ४ ॥

इति नैष्कर्म्यसिद्धिप्रकरणव्याख्या समाप्ता ॥

---

# कारिकाणामनुक्रमणिका।

पृष्ठं

पृष्ठं

पृष्ठं

---

# NOTES.

*N. B. The figures on the left indicate the section or verse. If followed by ( c ), then the commentary is indicated.—*

*The lines are numbered from the beginning of each section.*

## Chapter I.

1 ( *c* ). p. 4. पयोऽस्य *Brih.* 4. 3. 32. The other quotations in this section are untraceable.

2 ( *c* ). The quotations are from *Chhâ.* 6. 14. 2; 4. 9. 3.

3. At the end of line 1, C reads °र्थम्.

10 ( *c* ). The first quotation is from *Brih.* 4. 4. 5; the second is untraceable.

14 ( *c* ). The quotation is from *S'vetâ.* 3. 8.

17. *Mîmâmsâ* 1. 2. 1.

18. *Is'â.* 2.

20. At end of line 3, CDF read सत्यप्यदोषता.

21 ( *c* ). Quotations from *Brih* 4. 4. 22; *Is'â.* 11.

22 ( *c* ). अग्निमुग्धः &c. not traceable; प्लवा ह्येते Mund. 1. 2. 7; न तं विदाथ untraceable; अविद्यायां Katha 2. 5; यामिमां Gitâ. 2. 42.

26 ( *c* ). The *Vis'vajidadhikarana* is *Mîmâmsâ* 4. 3. 10–16. The first quotation is from *Brih.* 1. 5. 16. The second is untraceable.

28. The explanation of the curious expression श्वश्रूनिर्गच्छोक्ति is worthy of note. It must have been well understood in Sures'vara's time, but I have met with it nowhere else.

29. The reference in line 1 is to verse 9. The first quotation in the commentary (p. 22) is from *Brih* 4. 3. 32. The second is untraceable.

32. In the last line, AB read यद्वा.

36. In line 2, CEF insert आत्मानं before लभते.

38. Line 6. AD read विद्यांशान् for विद्यां सा.

39. The reference in line 1 is to verse 35, and in line 2 to verse 29. In the second line BE read तदभ्युदया° for तदभ्युच्चया°. In line 6, CF end with °कर्मभिः.

41 (*c*). The quotation is from *Pras'na* 3. 7, with जयति for नयति.

44 (*c*). The references are as follows :—
*Bṛih.* 4. 4. 7 ; 4. 4. 6 ; 3. 2. 11 (original has समवनीयन्ते); 4. 4. 6. The last quotation, कामबन्धनं &c., is included in the text of AB, as verse 45.

45. आरादुपकारत्व means "contributing indirectly." See commentary on verse 51, where आरात् is contrasted with साक्षात्.

49 (*c*). Quotation from *Manu.* 2. 4.

51. *Gîtâ.* 6. 3.

52. Line 2. For याथात्म्या°, ADF read याथातथ्या°.
Line 6. Quotations from *Bṛih.* 4. 4. 6; *Kaṭha* 5. 1.
The quotation in commentary is from *Mahânâr.* 22. 1.

54. Line 4 refers to verse 29. In line 6, AB read लाभ for स्वभाव.

60 (*c*). The first quotation is from *Chhâ.* 1. 1. 10; the second I cannot find.

61 (*c*). Quotations as in 60.

67. Line 5. *Bṛih.* 4. 1. 2; line 9, *Idem.* 4. 4. 21.

70. C inserts प्रोच्यते at end of line 3, and so originally F.

71. In last line, BC read नो for ना.

72. AB read प्रमुच्येरन् in line 3. The quotation in the commentary is from *Bṛih.* 4. 1. 2.

76. काशं कुशं वावलम्ब्य. The कुशकाशावलम्बनन्याय means the being driven to an argument or position

wholly untenable. It is thus defined in *Vâchaspatyam* ( s. v. न्याय ) :—

नद्यादौ पतितस्य सन्तरणानभिज्ञस्य यथा कुशकाशावलम्बनं निरर्थकमेवं प्रबलयुक्तिषु निराकृतासु दुर्बलयुक्त्यवलम्बनं निरर्थकमित्येवमवलम्बनस्य निरर्थकत्वविवक्षायामस्य प्रवृत्तिः ।

78. In line 6, F reads तथापि for तदपि. In line 9, EF have चेत् for च; and C reads प्रज्ञात्मवेदिनाम्.

79. Beginning of line 4, तोयस्योष्णाङ्गता C.

80. Quotation is from verse 9. For that in the commentary, compare *S'atapatha.* 4. 4. 5. 2 " स कृष्णविषाणां च मेखलां च चात्वाले प्रास्यति. " See also *Jaiminîyanyâyamâlâvistara* 4. 2. 14.

81 ( *c* ). Quotation from *Muṇḍ* 2. 2. 8. The न्याय, " अश्रमस्त्रेण शाम्यति " is not in any of the Dictionaries. In the last line of the text, CF read चेह for चेत्तु.

84. Line 4. CF read तथा नास्ति for तथैवास्तु.

85. Lines 1 and 2 refer to verses 9 and 14.

87. Line 1 refers to verse 15. The other quotation is from *Muṇḍ*. 1. 2. 12.

88. The quotations in line 1 are from *Bṛih.* 1. 4. 7; 2. 4. 5. The verse in the commentary, " विधिरत्यन्तं &c.," is quoted on p. 4077 of the *Vâchaspatyam*, and ascribed to Laugâkshibhâskara. It occurs indeed in that author's work *Arthasaṁgraha* ( p. 17 of Benares Sanskrit Series, No. 4 ), but seems to be a quotation from another source.

It is thus translated by Dr. Thibaut, the editor of the above work :—

" An injunction takes place when something is absolutely non-established; an injunction of necessary arrangement [ *i. e.* नियमविधि ] when one alternative is already established; when both alternatives are already established, ( the injunction required ) is

called limitation (परिसंख्या)." To understand this aright, the context which precedes and follows must be carefully studied.

89. Line 1 refers to verse 15. In the third line of the commentary, F has अनैवं° for अनेवं°. In regard to this, see notes on Chap II. 1.

90. Line 1 refers to verse 16. In last line, AB read तन्न्याय्यं for न न्याय्यं. The first part of that line refers to verse 16.

91. In line 2, for उद्भाव्यते, CF read उद्भास्यते. Line 4 is *Brahmasûtra*. 1. 1. 1, 2.

92 (*c*). Line 1 is part of *Is'â*. 2, as quoted in verse 18.

96. The same S'ruti is again quoted here, in text and commentary.

97. Line 1 refers to verse 19.

99. Refers to verse 21.

## CHAPTER II.

1. The reading अनेवंविषयत्वं in the first line, is that of CE only. All the other MSS. of the text, and the commentary of F, read अनैवं°. There is an extract from the commentary in the margin of B, which runs thus:—श्रोत्रादीन्द्रियाणां अनैवंविषयत्वादद्वैतात्माविषयत्वादित्यर्थः । It is curious that there should be this agreement between MSS. obtained from such different sources.

 The quotation in the commentary is from *Bṛih.* 2. 4. 11.

2. Here too, AB read अनैवं°. In line 3, F reads उत्थाप्यते for उपस्थाप्यते

 The quotations in the Com. are from *Bṛih* 1. 4. 2; *Tait.* 3. 1. 1, and 3. 6. 1.

3. With reference to line 1, in the margin of C it is said अन्यः श्रोता श्रोत्रन्तरः.

5 (*c*). The references are as follows:—*Pāṇini* 3. 2. 59; 5. 3. 27; 5. 3. 30; 1. 1. 38.

9. The MS. E has नाशः for ध्वंसः. The reference in the Com. is to verse 5 of this chapter.

15 (*c*). References to verse 11, and *Chhâ* 6. 5. 1.

20. In line 1, AC have कारण for करण.

21 (*c*). The Lokâyatikas are followers of the Chârvâka heresy, for a description of which see chapter 1 of *Sarvadars'ansaṁgraha.* There is a translation of this work, by Messrs. Cowell and Gough, in Trübner's Oriental Series. In Chap. v of *Vṛiddhahârîtasaṁhitâ*, they are thus defined:—

ये तु वै हेतुकं वाक्यमाश्रित्यैव स्ववाग्बलात् ।
वैष्णवं प्रतिषिध्यन्ति ते लोकायतिकाः स्मृताः ॥

26. In line 1, AB read **प्रत्यक्षेणा°.**
30. In last line AB have **सं** for **सा.**
34. Reference is to *Bṛih.* 4. 3. 23.
35. At the end of line 2, E reads **इशेः.**
38. For the last word A has **सिसृक्ष्यति,** and BD **सि-सृप्स्यति.**
42. Quotations from *Bṛih.* 3. 7. 23 ; 2. 3. 6.
43. The opening words are from *Gîtâ* xiii. 5.
50. The following is in the margin of B:—
    **कामुकानां कमनीयत्वबुद्धिः। परिव्राजकानामशुचित्वबुद्धिः। शुनां स्वाद्वीत्वबुद्धिः।**
51. We have here again the old story of **सोमशर्मपिता** as found in *Panchatantra* 5. 9. The details as given in the commentary, however, differ from those of the former work.
53. In line 3, the reading of AB is **च** instead of **वा.** The quotation in the commentary is from verse 46.
54. At end of line 3, ABF have **°वृत्तिः.**
57. The reference here is to *Chhâ* 7. 1–26.
58. In last line F has **अवीक्ष्यमाणः.**
59. The curious word **त्वाच्छिरस्क** means "ending in the termination **त्वात्**" as is the case in argument &c. "So-and-so is so-and-so, because of so-and-so (**अमुकत्वात्**)." I am indebted to my friend Prof. R. G. Bhâṇḍârkar for making this clear to me. The commentary is not quite explicit enough.
61. In line 2, CF read **अथाविकृत एवायं.**
62 (*c*). As regards the **प्रतिबन्दीन्याय,** the following explanation is given in the *Vâchaspatyam,* s. v. **प्रतिबन्धि(न्धी)–प्रकृतैककल्पे प्रवृत्तं पुरुषमुद्दिश्याप्रकृतकल्पान्तरापादने प्रतिवादिमतेऽनिष्टान्तरप्रसञ्जकवाक्ये । तत्रार्थे प्रतिबन्दीशब्दोऽपि।** See, also, Bhîmâchârya's *Nyâyakos'a.*

64. Line 1. CF read °विष्करणार्थत्वात्. Verse 64, the last line of 66, and the whole of 67, occur twice in Chap. VI. 3 of the Vârtika on *Brihadâraṇyakabhâshya*.

68 ( *c* ). In line 4, instead of निर्वृत्तत्वात् F has विवर्त्तत्वात्.

72 ( *c* ). E reads विशेष instead of विषय.

79. The last word is न in E.

82. Line 2. AB have अवरोध for अवबोध.

The षड्भाव is said in III. 1 (line 2), to be जन्मादि. In the Vârtika referred to above there is this line—जन्मादिविक्रियाषट्कसङ्गतिः परमात्मनः.

86. Line 1. Here, and in many other places, DF read परिणामिनीत्वं.

90. Last line. Instead of स्वगत, ABEF read प्राक्तन. B adds प्राग्भातं in the margin, and E स्वगतं.

In the commentary, last line but one, F reads नष्टायां.

91. Last line. All MSS. but E read दृष्टिं.

92. The references here are to *Brih*. 3. 4. 2; 2. 4. 14.

95. In explanation of कचादिवत् the following is found in the margin of B :—केशोण्ड्रकवत् । खेऽक्षिदोषेण केशसदृशं किञ्चिद्दृश्यते तत्केशोण्ड्रकम् ॥. See केशोण्ड्रक in the abridged St. Petersburg Dictionary, where a reference is given to *Aitareya Araṇyaka* 358. 10. In explaining the word वटरकाणि Sâyaṇa says—"वटरकाणि वर्तुलानि सूक्ष्माणि शुक्लवर्णानि केशोण्ड्रकशब्दाभिधेयानि सम्पतन्तीव सम्यङ्नेत्रान्निर्गच्छन्तीव सर्वैर्दृश्यन्ते ।"

97. Line 2. निर्माल्यवत्. In his commentary on *Mâgha* VIII. 60, Mallinâtha says–निर्माल्यैर्भुक्तोज्झितमाल्यैः ।

99. Last line. ABDF read अर्थत्वात्.

102. A reads मंस्यते, and F अन्धधीः.

103. Line 2. AB read अनुपातितः.

104. The peculiar expression आगोपालाविपालपण्डितं I have met with in no other author. It occurs also in III. 58.

107 ( *c* ). The three quotations here are from Sures'vara's *Brihadâranyakabhâshyavârttika,* otherwise called the *Nyâyavârttika* ( Burnell's Catalogue of Tanjore MSS. p. 34*a* ). They are consecutive verses, but come in the reverse order to that here given. My MS. was copied from No. 6300 in the Tanjore Library, and the verses are not numbered. I here subjoin them.

स्मृतिनिश्चितिसंसीतिरागादिहिरुगात्मसु ।
अहंरूपेण योऽन्वेति स प्रमाता परो मतः ॥
स्मरणादिविभागेन ज्ञातर्येकत्र यत्पृथक् ।
प्रथते नैकरूपा हि तज्ज्ञानं ज्ञातृकर्तृकम् ॥
विभिन्नो बहिराभाति जातिरूपक्रियादिमान् ।
विभिन्नानुभवादेव ज्ञातृज्ञानात्स गोचरः ॥

They are found in v. 4 of Sures'vara's work, which corresponds with III. 4 of the Upanishad. The reading तज्ज्ञानं, in verse 2, for the तद्धानं of our text, is that of MS. F also.

111 ( *c* ). For the quotation, see *Chhandah-sûtra* III. 59, where, however, the reading is निवृत्. For निचृत् see Kâtyâyana's *Sarvânukramanî* ( p. 2, Oxford edn. ).

113. Line 3. This refers to *Brih.* 3. 8. 8 ; 2. 3. 6 ; Katha 2. 18.

115. Line 3. BD read ताः for तान्.

116. Line 7. तद्बुभुत्सया is found in E only, and its commentary explains that reading. All the rest give तच्छुश्रुत्सया, which F explains by तच्छोधनेच्छया. In the next line, ABCDF read ह्येकल आस्थितः । The quotation in the commentary is from *Brih.* 3. 9. 26.

118. The reference in line 2 is to *Brih.* 4. 5. 15.

In the colophon of the commentary, F inserts सम्बन्धाख्य just before चन्द्रिकायां.

---

## CHAPTER III.

1. Line 6. The quotation is from *Chhândogya* 1. 6. 1; and that on line 6 (page 107) is from 7. 1. 3 of same.

   On line 1 (page 110), for अपनुत्तौ AB read अनुपपत्तौ, and, in line 3, CF insert तृतीयोऽयं before आरभ्यते.

3. For this verse, compare the following from S'aṁkara's *Svâtmanirûpaṇa* (verse 29):—

   सामानाधिकरण्यं तदनु विशेषणविशेष्यता चेति ।
   अथ लक्ष्यलक्षकत्वं भवति पदार्थात्मनां सम्बन्धः ॥

4. Line 8. ABD read अपरिसमाप्य, and so does F in the commentary. The two quotations in the commentary are from *Bṛihadâraṇyaka* 4. 4. 23; 2. 4. 5.

7. Line 2 (p. 115). The quotation is from *Chhândogya* 6. 2. 2, and that in the commentary is from *Kaushîtaki* 4. 19, 20.

9. Line 1 (p. 117). The word अवबोधः is found in C only.

18. The quotation in commentary is *Bṛih.* 3. 4. 1.

21. The last word, according to EF, is विधर्मिणि.

22. Line 2. CF read आगमापाय°; and, in the next line, ABDF have यस्मादिद्धं निजं तमः ।

28. Line 1. BCD read इयं च वाक्यार्थ°.

29 (*c*). Quotation from *Bṛihadâraṇyaka* 1. 4. 2.

31. In last line, पदार्थं is the reading of ABF.

33. Last line. नैतीत्यतः CE.

35 (*c*). The expression नद्यास्तीरे फलानि सन्ति occurs on page 136, line 8, of the text. Also in chap. I of *Sarvadars'anasaṁgraha*:—"नद्यास्तीरे फलानि सन्तीति वचनश्रवणसमनन्तरं फलार्थिनां नदीतीरे प्रवृत्तिरिति."

The quotation वायुर्वै &c. is from TS. 3. 4. 3. 2. With regard to अम्बुनि मज्जन्ति &c., compare *Mahâbhârata* 2. 2196 (2. 64. 11)–"मज्जन्त्यलाबूनि शिलाः प्लवन्ते." The words अग्निर्हिमस्य भेषजं are from VS. 23. 10.

38. Line 2. For बोध्ये, BD have बोधे.

39. The verse refers to *Chhândogya* 8. 12. 4.

40. The quotations are from *Chhândogya* 6. 8. 7; 4. 15. 1; 8. 12. 4 and *Bṛihadâraṇyaka* 1. 4. 10. The additional one in the commentary is from *Bṛihad.* 4. 3. 7.

41 (*c*). The quotation is from *Bṛihad.* 4. 3. 6.

42 (*c*). Quotation from *Bṛihad.* 4. 3. 7.

46 (*c*). The words सत्यं ज्ञानमनन्तं are from *Tait.* 2. 1. 1.

50 (*c*). *Bṛihad.* 3. 4. 2 is quoted here.

52. Line 3. For अवसातुं E has अनुमातुं.

53. Line 4. All the MSS. except E read सदसीति, but the commentary seems to require तत्.

55. In line 1, the reading of CF is आगमापाय°.

56. Line 1. Instead of प्रत्यक्षेणैव, AB have प्रत्यक्त्वेनैव.

57. The quotation is from *Kaṭha.* 2. 23.

60. Line 3. For अवबोध, AB read अनवबोध. In line 6, कर्तृकं is found in A instead of कश्रुकं. In that same line, CF read परिधायोपकार्यत्वापकार्यत्व°. In line 7, the reading of F is बाह्यविषयोप°.

61. Line 1. °भेदाभिन्ने is the reading of BC.

63 (*c*). The first quotation is from *Bṛihad.* 4. 3. 7.

64. This verse is quoted in *Panchadas'î* VIII. 23. The illustration appears to be taken from S'aṁkara's *Upades'asâhasri*, verses 587–9 (XVIII. 175–7) of which run thus :—

> नवबुद्ध्यपहाराद्धि स्वात्मानं दशपूरणम् ।
> अपश्यन् ज्ञातुमेवेच्छेत्स्वमात्मानं जनस्तथा ॥

अविद्यावद्धचक्षुष्ट्वात्कामापहृतधीः सदा ।
विविक्तं दृशिमात्मानं नेक्षते दशमं यथा ॥
दशमस्त्वमसीत्येवं तत्त्वमस्यादिवाक्यतः ।
स्वमात्मानं विजानाति कृत्स्नान्तःकरणेक्षणम् ॥

In Krishṇa S'ástrî Navare's edition, printed in Bombay, the verses are 174–6 of Prakaraṇa xviii.

'7. Line 2. प्रत्यगात्मार्थाभिधा° BCF.

'6 (c). Line 2. The words यजमानः प्रस्तरः are found in *Aitareya Brâhmaṇa* 2. 3, and in TS. 1. 7. 4. 4.

'0 (c). The quotation is from *Bṛihad.* 2. 4. 5.

'1 (c). Quotation from *Chhândogya* 3. 14. 1.

'3. The Draviḍas, who are spoken of so disparagingly here, are said to be degraded Kshatriyas. They are thus referred to by *Manu* (x. 22):—

झल्लो मल्लश्च राजन्याद्व्रात्याल्लिच्छिविरेव च ।
नटश्च करणश्चैव खसो द्रविड एव च ॥

In a foot-note to his translation of this passage, Dr. Bühler quotes from a commentator to the effect that the Khasas and Draviḍas were water-carriers and drawers of water. (*Sacred Books of the East.* Vol. xxv).

Their degenerate condition is depicted as follows in the *Mahâbhârata* (xiv. 29, Lines 830–2):—

ततस्तु क्षत्रियाः केचिज्जामदग्न्यभयार्दिताः ।
विविशुर्गिरिदुर्गाणि मृगाः सिंहार्दिता इव ॥
तेषां स्वविहितं कर्म तद्भयान्नानुतिष्ठताम् ।
प्रजा वृषलतां प्राप्ता ब्राह्मणानामदर्शनात् ॥
एवं ते द्रविडाभीराः पुण्ड्राश्च शवरैः सह ।
वृषलत्वं परिगता व्युत्थानात्क्षत्रधर्मिणः ॥

I am indebted to the *Vâchaspatyam* for these two passages (s. v. द्रविड.)

The two quotations in the commentary on this section are from *Chhâ* 8. 15. 1 and *Muṇḍaka* 1. 2. 12.

94. Line 3. Instead of **प्रामाण्य°**, DF have **प्रामाण्येन**; and so originally A. The reading of B is **प्रामाण्ये**, and of C **प्रमाण°**.

95. The quotation in this verse is from *Kaṭha.* 4. 1, from which also the second one in the commentary is taken.

98 ( *c* ). Quotation from *Tait.* 2. 4. 1.

102. All the MSS. but E read **अभिधायकः** at end of last line, but the opening words of next section seem to require the reading adopted in the text.

103. The words **नाज्ञसात्राभिधीयते** are found in the text of EF only.

104. Last line. E substitutes **सिद्धाः** in margin for **विज्ञः**. The reading **विबोधिताः** is that of C only; E has **°ता**, and the rest **°तः**.

108. The quotation in first line is from verse 104.

109. Line 2. C has **विविक्तः**.

116. Line 1. The word **मात्र** occurs in CF only.

117. Last line. The reading of E is **बुभुत्सन्तः** which seems to be implied also in the commentary.

125. Line 3. For **प्रसंख्याने**, E has **°नं**, and CF **°न**.

126. Line 3. After **पतितत्वं** the reading of A was originally **न च** but the **च** has been erased; B has neither. CDE have **न**, but in the margin of the two last **च** is substituted. The latter is the reading of F. It will be seen that the commentary explains **न**, but gives **च** as variant.

## Chapter IV.

12. Line 1. Instead of अवलेहिनीभिः the reading of E is अवलोडिनी° (?).

13. Last line. The reading of ABC is नाहमेक्षते. This is also the reading in the extract from the commentary which is given in the margin of B, and of MS. G.

14. Line 3. विवेकसम्भवः C.

16. Line 2. CF insert सन् after अनात्मस्थः, and ABF read स्थाणोः instead of स्थाणौ.

17. The quotations are from *Kena* 1. 6, and *Brihad.* 3. 4. 2.

18. Line 1. ABD have ईक्षितुम्.

20. Line 2. BCF read निरर्थकः; and CF संसारि° in next line. The first half of the verse is from 492 (xviii. 78) of S'aṁkara's *Upades'asâhasrî.* Here, and in the following quotations from this work, the first figures are the number of the verse in the *Paṇḍit* (1869–70), and those in brackets show the *prakarana* and verse according to Krishṇa S'âstri Navare's edition published in Bombay in 1886.

21. Line 2. The reading of ABD is विभागज्ञैः. The quotation in the commentary is from *Bṛih.* 1. 4. 10.

22 }
23 } . The verses are *Upades'a.* 510, 511 (xviii. 96, 97).

24. The verse is *Upades'a.* 513 (xviii. 99). The commentary quotes from *Bṛih.* 4. 3. 23.

25. *Upades'asâhasrî.* 515 (xviii. 101).

26. *Upades'a.* 45 (vi. 1).

27. *Upades'a.* 47 (vi. 3). In line 2. the *Upades'a* reads अविद्याध्यात्मनः, and BCD. (and originally A) अविद्यात्मनः.

28 } . *Upades'a.* 46, 48 ( VI. 2, 4 ).
29 }

30. *Upades'a.* 214 (XV. 16). The fifteenth *prakaraṇa* is the नान्यदन्यत्प्रकरण referred to in the commentary, and takes its name from the opening words of its first verse (नान्यदन्यद्भवेत् &c).

31–33. *Upades'a.* 603–5 (XVIII. 190–2). The तत्त्वमसिप्रकरण referred to in the commentary (on 31) is *Prakaraṇa* XVIII. The quotations in the commentary on 33 are from *Chhâ.* 6. 2. 1; *Tait.* 2. 1. 1.

34–35. *Upades'a.* 587, 588 ( XVIII. 174–5 ). In the latter verse, CF read °हृतधीः.

38. Line 2. ABEF read मात्रशेषत्वात्, but the commentary requires the reading of the text.

39. Line 2. Instead of अव्ययं, ACDF have अद्वयं. The quotation in the commentary is from *Bṛihad.* 4. 3. 23.

40 ( *c* ). The quotation is from *Bṛihad.* 4. 3. 23.

41. The verse is Gauḍapâda's *Kârikâs* I. 11. In the second line of it, ABCDF read तु for तौ.

42. This also is Gauḍapâda's I. 15.

43. The verse is *Upades'asâhasrî.* 351 ( XVIII 26 ). The reading there is सुषुप्त्याख्यं.

44 ( *c* ). The *Vâchaspatyam* ( s. v. द्राविड ) quotes the following verse from the *Skandapurâṇa* in regard to the five Drâviḍas :—

कर्णाटाश्चैव तैलङ्गा गुर्जरा राष्ट्रवासिनः ।
आन्ध्राश्च द्राविडाः पञ्च विन्ध्यदक्षिणवासिनः ॥

Who are the *Kevalas* referred to in the commentary? S'aṁkarâchârya lived in the Malabar country, the ancient name of which was *Kerala.* Is the other name a synonym of this?

In *Bhîshma-parva*, line 352 (Chap. IX), Prof. H. H Wilson met with केवलं as a variant of केरलं, but Dr. Fitz Edward Hall takes it as qualifying the preceding word मल्लराष्ट्रं. See p. 165, Vol. II of Wilson's *Vishṇu Purâṇa.*

45 (*c*). The first quotation here is from *Ṛigveda* 10.129. 3, and the second from *Manu* 1. 5.

46. Line 4. All the MSS. but E, read विक्रियावतोः, but the commentary requires the reading given in the text.

53. Line 2. The text of E has न मत्तोऽन्योऽस्ति.

55. The MSS. ABD read °सर्जनं in line 2, and °लम्बनं in line 3. The quotation in the commentary is from *Bṛihad.* 4. 3. 31.

57. Line 1. The reading of C is °प्रवृत्त्यैव.

61. Line 2. For शोषेणैव the reading of ABDF is स्पर्शनैव.

62. This verse is quoted in the *Vedântasâra,* but there a third line is added. Where did it come from ?

63 (*c*). I cannot trace the two passages quoted here, except that the third line of the second one is from *Gîtâ* VI. 45.

64. The quotations in this verse are from *Gîtâ* IV. 19, and XIV. 22.

65. The verse is *Upades'asâhasrî* 643 (XVIII. 231); but the reading there is यो हि यस्मात्.

66. This verse is *Upades'asâhasrî* 644 (XVIII. 232). In its second line, ACDE read मृष्टान्न°.

68 (*c*). The quotation is from *Gîtâ* XIII. 7.

69. The *kârikâ* is quoted in the *Vedântasâra.*

73. Line 1. The reading of all but E is निरस्य सर्वकर्माणि, but the commentary requires that given in the text.

75. The reference here is to *Yogadars'ana* 2. 37, namely **अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम् ।**

76 (*c*). I cannot trace the first quotation to its source. Even the *Vâchaspatyam,*-that vast, but ill-arranged, store house of Paurâṇika lore,—fails us here. The second is from *Ṛigveda* 10. 75. 5.

77 (*c*). The sûtra quoted here is *Chhandah-sûtra* 3. 59. The Calcutta edition however has **निवृत्.** The same sûtra occurs in Kâtyâyana's *Sarvânukramaṇî* (p. 2, Oxford edition), but the reading there is **निचृत्.**

---